दिग्गजाश्चैव चत्वारः, क्षितिश्च गगनं ग्रहाः।

अधस्ताद् धरणीं चाऽसौ, नागो धारयते हि यः।।

शेषश्च पन्नगश्रेष्ठः, स्वस्ति तुभ्यं प्रयच्छतु।।

ॐ द्रविणोदा द्रविण सस्तुरस्य द्रविणोदाः सनरस्य प्रयंसत्।
द्रविणोदा वीरवतीमिषं नो द्रविणोदार सते दीर्घमायुः।। **(ऋक्)**

ॐ द्रविणोदाः पिपीषति जुहोत प्रचतिष्ठत।नेष्ट्रा दृतु भिरिष्यत।। **(यजुः)**

ॐ देवो 3 वो 3 द्रविणोदाः।पूर्णा विवष्ट्वासिचम्।उद्वा 1 सिंचा 2।ध्वमुपवा पृणध्वम्। आदिद्वोदे 2। वओहते।इडा 2 3 भा 3 4 3। ओ 2 3 4 5 इ।डा।। **(साम)**

ॐ धातारातिः सवितेदं जुषन्ताम् प्रजापतिर्निधिपतिर्नो अग्निः त्वष्टा विष्णुः प्रजया संरराणो यजमानाय द्रविणं दधातु।। **(अथर्व)**

**यजमानः-** ॐ व्रत–जप–नियम–तपः–स्वाध्याय–क्रतु–शम–दम–दया–दान विशिष्टानां सर्वेषां भवतां ब्राम्हणानां मनः समाधीयताम्।इति अक्षतान्। **विप्राः-** ॐ समाहित मनसः स्म।

**यजमानः-** ॐ प्रसीदन्तु भवन्तः। **विप्राः-** प्रसन्नाः स्म।।

अत्र यजमानः पात्रद्वये स्थापयित्वा– **प्रथम पात्रे अक्षतान् प्रक्षिपेत्।**

**विप्राः-** ॐ शान्तिरस्तु।ॐ पुष्टिरस्तु।ॐ तुष्टिरस्तु।ॐ वृद्धिरस्तु।
ॐ अविघ्नमस्तु।ॐ आयुष्यमस्तु।ॐ आरोग्यमस्तु।ॐ शिवमस्तु।
ॐ शिवं कर्मास्तु।ॐ कर्म समृद्धिरस्तु।ॐ धर्म समृद्धिरस्तु।ॐ वेद समृद्धिरस्तु।
ॐ शास्त्र समृद्धिरस्तु। धन–धान्य समृद्धिरस्तु। पुत्र–पौत्र समृद्धिरस्तु।
ॐ इष्ट सम्पदस्तु।।

**द्वितीय पात्रे अक्षतान् प्रक्षिपेत्।**

ॐ अरिष्ट निरसनमस्तु। यत्पापं रोगं अशुभं अकल्याणं तद्दूरे प्रतिहतमस्तु।

**प्रथम पात्रे दूर्वया जलम् प्रक्षिपेत्।**

ॐ यच्छ्रेयस्तदस्तु। ॐ उत्तरे कर्मणि निर्विघ्नमस्तु। ॐ उत्तरोत्तरम् अहरहः अभिवृद्धिरस्तु।ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम्।
ॐ तिथि–करण–मुहूर्त–नक्षत्र–ग्रह–लग्नसम्पदस्तु।
ॐ तिथि–करण–मुहूर्त–नक्षत्र–ग्रह–लग्नाधिदेवताः प्रीयन्ताम्।

ॐ तिथि–करणे–समुहूर्ते–सनक्षत्रे–सग्रहे–सलग्ने–साधिदैवते प्रीयेताम्।
ॐ दुर्गा–पांचाल्यौ प्रीयेताम्। ॐ अग्निपुरोगाः विश्वेदेवाः प्रीयन्ताम्।
ॐ इन्द्रपुरोगाः मरुद्गणाः प्रीयन्ताम्। ॐ वशिष्ठ पुरोगाः ऋषिगणाः प्रीयन्ताम्।
ॐ माहेश्वरी पुरोगा उमामातरः प्रीयन्ताम्। ॐ अरुन्धती पुरोगा एकपत्न्यः प्रीयन्ताम्।
ॐ विष्णु पुरोगाः सर्वे देवाः प्रीयन्ताम्। ॐ ब्रम्ह पुरोगाः सर्वे वेदाः प्रीयन्ताम्।
ॐ ब्रम्ह च ब्राम्हणाश्च प्रीयन्ताम्। ॐ श्री सरस्वत्यौ प्रीयेताम्। ॐ श्रद्धा–मेधा प्रीयेताम्।
ॐ भगवती कात्यायनी प्रीयताम्। ॐ भगवती माहेश्वरी प्रीयताम्। ॐ भगवती ऋद्धिकरी प्रीयताम्। ॐ भगवती वृद्धिकरी प्रीयताम्। ॐ भगवती पुष्टिकरी प्रीयताम्।
ॐ भगवती तुष्टिकरी प्रीयताम्। भगवन्तौ विघ्न–विनायकौ प्रीयेताम्।
ॐ सर्वाः कुलदेवताः प्रीयन्ताम्। सर्वाः ग्रामदेवताः प्रीयन्ताम्। ॐ सर्वाः इष्टदेवताः प्रीयन्ताम्।

**द्वितीय पात्रे अक्षतान् प्रक्षिपेत्।**

ॐ हताश्च ब्रम्हद्विषः। ॐ हताश्च परिपन्थिनः। ॐ हताश्च विघ्नकर्तारः।
ॐ शत्रवः पराभवं यान्तु। ॐ शाम्यन्तु घोराणि। ॐ शाम्यन्तु पापानि।
ॐ शाम्यन्तु ईतयः। ॐ शाम्यन्तु उपद्रवाः।

**प्रथम पात्रे दूर्वया जलम् प्रक्षिपेत्।**

ॐ शुभानि वर्धन्ताम्। ॐ शिवा आपः सन्तु। ॐ शिवा ऋतवः सन्तु। ॐ शिवा औषधयः सन्तु। ॐ शिवा वनस्पतयः सन्तु। ॐ शिवा आतिथयः सन्तु। ॐ शिवा अग्नयः सन्तु। ॐ शिवा आहुतयः सन्तु। ॐ अहोरात्रे शिवेस्याताम्।

**ॐ निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्ताम् योगक्षेमो नः कल्पताम्।।**

ॐ शुक्र–अंगारक–बुध–वृहस्पति–शनैश्चर–राहु–केतु–सोम सहित आदित्य पुरोगाः सर्वे ग्रहाः प्रीयन्ताम्। ॐ भगवान नारायणः प्रीयताम्। ॐ भगवान पर्जन्यः प्रीयताम्।
ॐ भगवान स्वामी महासेनः प्रीयताम्। ॐ पुरोऽनुवाक्यया यत्पुण्यं तदस्तु।
ॐ याज्यया यत्पुण्यं तदस्तु। ॐ वषट्कारेण यत्पुण्यं तदस्तु। ॐ प्रातः सूर्योदये यत्पुण्यं तदस्तु।
**यजमानः-** ॐ एतत्कल्याण युक्तम् पुण्यं पुण्याहम् वाचयिष्ये। **अंजलिं बद्ध्वा।**
**विप्राः-** वाच्यताम्।

ॐ ब्राम्हं पुण्य महर्यच्च, सृष्टि उत्पादन कारकम्।

वेद वृक्षोद्भवम् नित्यम्, तत्पुण्याहम् ब्रुवन्तु नः।।

**यजमानः-** ॐ भो ब्राम्हणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे कियमाणस्य अमुक कर्मणः पुण्याहम् भवन्तो ब्रुवन्तु। **(त्रिवारम्) विप्राः-** ॐ पुण्याहम्–पुण्याहम्–पुण्याहम्।

**ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः। पुनन्तु विश्वा भूतानि जातवेदः पुनीह मा।।**

**यजमानः-** ॐ पृथिव्यां उद्धृतायां तु, यत्कल्याणं पुरा कृतम्। ऋषिभिः सिद्ध गन्धर्वै, तत्कल्याणं ब्रुवन्तु नः।।

ॐ भो ब्राम्हणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे कियमाणस्य अमुक कर्मणः कल्याणम् भवन्तो ब्रुवन्तु। **(त्रिवारम्)**

**विप्राः-** कल्याणम्–कल्याणम्–कल्याणम्।

ॐ यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रम्हराजन्याभ्या ग्वं शूद्राय चार्याय च स्वाय चारणाय च।प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यातामुप मादो नमतु।

**यजमानः-** ॐ सागरस्य तु या, ऋद्धिः महालक्ष्म्यादिभिः कृता। सम्पूर्णा सुप्रभावा च, तामृद्धिं प्रब्रुवन्तु नः।।

ॐ भो ब्राम्हणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे कियमाणस्य अमुक कर्मणः ऋद्धिम् भवन्तो ब्रुवन्तु। **(त्रिवारम्) विप्राः-** ॐ कर्म ऋध्यताम्–कर्म ऋध्यताम्–कर्म ऋध्यताम्।

ॐ सत्रस्य ऋद्धिरस्य गन्म ज्योतिरमृता अभूम। दिवं पृथिव्या अध्यारुहा माविदाम देवान्त्स्व ज्योतिः।

**यजमानः-** ॐ स्वस्तिस्तु या विनाशाख्या, पुण्य कल्याण वृद्धिदा।विनायक प्रिया नित्यं, तां च स्वस्तिं ब्रुवन्तु नः।।

ॐ भो ब्राम्हणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे कियमाणस्य अमुक कर्मणः स्वस्ति भवन्तो ब्रुवन्तु। **(त्रिवारम्)**

**विप्राः-** ॐ आयुष्मते स्वस्ति–आयुष्मते स्वस्ति–आयुष्मते स्वस्ति।

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।।

**यजमानः-** ॐ समुद्र मथनाज्जाता, जगदानन्दकारिका।

हरि प्रिया च मांगल्या, तां श्रियं च ब्रुवन्तु नः।।

ॐ भो ब्राम्हणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे क्रियमाणस्य अमुक कर्मणः श्रीरस्तु भवन्तो ब्रुवन्तु। **(त्रिवारम्) विप्राः-** ॐ अस्तु श्रीः–अस्तु श्रीः–अस्तु श्रीः।

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्या वहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।इष्णन्निषाणा मुम्म इषाण सर्व लोकम्म इषाण।।

**यजमानः-** ॐ मृकण्ड सूनोरायुर्यद्, ध्रुव लोमशयोस्तथा।

आयुषा तेन संयुक्ता, जीवेम शरदः शतम्।।

ॐ भो ब्राम्हणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे क्रियमाणस्य अमुक कर्मणः शतं जीवन्तु भवन्तो ब्रुवन्तु। **(त्रिवारम्)**

**विप्राः-** ॐ शतं जीवन्तु भवन्तः–शतं जीवन्तु भवन्तः–शतं जीवन्तु भवन्तः।

ॐ शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्।पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषता युर्गन्तोः।।

**यजमानः-** ॐ शिव गौरी विवाहे या, या श्री रामे नृपात्मजे।

धनदस्य गृहे या श्रीः, अस्माकं सास्तु सद्मनि।।

ॐ भो ब्राम्हणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे क्रियमाणस्य अमुक कर्मणः श्रीरस्तु भवन्तो ब्रुवन्तु। **(त्रिवारम्) विप्राः-** ॐ अस्तु श्रीः–अस्तु श्रीः–अस्तु श्रीः।

ॐ मनसः काममाकूतिम् वाचः सत्यमशीय।

पशूना ग्वं रूप मन्यस्य रसो यशः श्रीः श्रयतां मयि स्वाहा।।

**यजमानः-** ॐ प्रजापतिः लोकपालो, धाता ब्रम्हा च देवराट्।

भगवान शाश्वतो नित्यं, नो वै रक्षन्तु सर्वदा।।

आयुष्मते स्वस्तिमते, यजमानाय दाशुषे।श्रिये दत्ताशिषः सन्तु, ऋत्विग्भिः वेद पारगैः।।

ॐ भो ब्राम्हणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे क्रियमाणस्य अमुक कर्मणः आयुष्मते भवन्तो ब्रुवन्तु। **(त्रिवारम्)**

**विप्राः-** ॐ आयुष्मते स्वस्ति–आयुष्मते स्वस्ति–आयुष्मते स्वस्ति।।

ॐ प्रति पन्थाम पद्महि स्वस्ति गामनेहसम्।येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु।।

**यजमानः साक्षतजलं गृहीत्वा-**

ॐ कृत एतद् अस्मिन् दानखण्डोक्त पुण्याह वाचने न्यूनातिरिक्तो यो विधिः स उपविष्ट ब्राम्हणानां बचनात् श्री महागणपति प्रसादाच्च सर्वः परिपूर्णोस्तु ।।

**विप्राः-** ॐ अस्तु परिपूर्णः– अस्तु परिपूर्णः– अस्तु परिपूर्णः ।।

**यजमानः साक्षतजलं दक्षिणाम् गृहीत्वा-**

ॐ अद्य कृतस्य स्वस्ति पुण्याह वाचन कर्मणः सांगता सिद्ध्यर्थम् तत् सम्पूर्ण फल प्राप्त्यर्थम् च स्वस्ति पुण्याह वाचकेभ्यो ब्राम्हणेभ्यो यथा शक्ति मनसोदिष्टाम् इमां दक्षिणां विभज्य दातुम् अहम् उत्सृजे ।।

**एकस्मिन् पात्रे वरुणोदकं गृहीत्वा अविधुराः चत्वारो ब्राम्हणाः दूर्वया अथवा आम्रपल्लवैः कुटुम्ब सहितं यजमानम् अभिषिन्चेयुः ।।**

**अभिषेक मंत्रः-**

ॐ आपो हिष्ठा मयो भुवस्तान् ऊर्जे दधातनमहेरणाय चक्षसे ।यो वः शिवतमो रसस्तस्य भाजयतेहनः ।उशतीरिव मातरः ।तस्मादरंगमामवो यस्य क्षयाय जिन्वथ आपो जनयथाचन ।।

ॐ वरुणस्योतम् भनमसि वरुणस्य स्कम्भ सर्जनीस्त्थो वरुणस्य ॠत सदन्यसि वरुणस्य ॠत सदन्मसि वरुणस्य ॠत सदन्मासीद ।।

ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।पुनन्तु विश्वा भूतानि जात वेदः पुनीहि मा ।।

ॐ विश्वानि देव सवितर्दुरितानि परासुव ।यद्भद्द्रं तन्न आसुव ।

ॐ अन्नपते अन्नस्य नो देह्यनमीवस्य शुष्मिणः ।प्रप्र दातारं तारिष ऊर्जम् नो धेहि द्विपदे चतुष्पदे ।।

ॐ द्यौः शान्तिरन्तरिक्ष ग्वं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रम्हशान्तिः सर्व ग्वं शान्तिः शान्तिरेव–शान्तिः सामा शान्तिरेधि ।।

ॐ यतोयतः समीहसे ततोनो अभयं कुरु ।शन्नः कुरु प्रजाभ्यो भयन्नः पशुभ्यः ।।

**प्रथम पात्र पातित जलेन सपरिवार गृहाश्च अभिषिंचयेत् ।**

**द्वितीय पात्र जलं एकान्ते पातयेत् ।।**

# श्री षोडश मातृका पूजनम्

**ध्यानम् –** ॐ गौरी पद्मा शची मेधा, सावित्री विजया जया।
देवसेना स्वधा स्वाहा, मातरो लोकमातरः।।
धृतिः पुष्टिस्तथा तुष्टिः, आत्मनः कुलदेवताः।
गणेशेनाधिका ह्येता, वृद्धौ पूज्यास्तु षोडश।।

ॐ भूर्भुवः स्वः श्री गौर्यादि षोडश मातृकाभ्यो नमः। ध्यानम् समर्पयामि।

## आवाहनम्

ॐ गौर्यै नमः। गौरीम् आवाहयामि, स्थापयामि।
ॐ पद्मायै नमः। पद्मम् आवाहयामि, स्थापयामि।
ॐ शच्यै नमः। शचीम् आवाहयामि, स्थापयामि।
ॐ मेधायै नमः। मेधाम् आवाहयामि, स्थापयामि।
ॐ सावित्र्यै नमः। सावित्रीम् आवाहयामि, स्थापयामि।
ॐ विजयायै नमः। विजयाम् आवाहयामि, स्थापयामि।
ॐ जयायै नमः। जयाम् आवाहयामि, स्थापयामि।
ॐ देवसेनायै नमः। देवसेनाम् आवाहयामि, स्थापयामि।
ॐ स्वधायै नमः। स्वाधाम् आवाहयामि, स्थापयामि।
ॐ स्वाहायै नमः। स्वाहाम् आवाहयामि, स्थापयामि।
ॐ मातृभ्यो नमः। मातृः आवाहयामि, स्थापयामि।
ॐ लोकमातृभ्यो नमः। लोकमातृः आवाहयामि, स्थापयामि।
ॐ धृत्यै नमः। धृतिम् आवाहयामि, स्थापयामि।
ॐ पुष्ट्यै नमः। पुष्टिम् आवाहयामि, स्थापयामि।
ॐ तुष्ट्यै नमः। तुष्टिम् आवाहयामि, स्थापयामि।
ॐ आत्मकुलदेवतायै नमः। आत्मकुलदेवताम् आवाहयामि, स्थापयामि।

## कलश स्थापनम्

ॐ तत्वा यामि ब्रम्हणा वन्दमानस्त दाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश ग्वं स मा न आयुः प्रमोषीः।। अस्मिन् मातृ कलशे वरुणम् आवाहयामि, स्थापयामि।

## प्राण प्रतिष्ठाम्

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ग्वं समिमं दधातु।
विश्वेदेवास इह मादयन्तामो 3 प्रतिष्ठ।।
श्री गौर्यादि षोडश मातृकाः सुप्रतिष्ठिता वरदा भवन्तु।।

## पूजनम्

पाद्यं, अर्घ्य, आचमनीयं, सर्वांगे स्नानीयं जलं समर्पयामि, पंचामृत स्नानं, शुद्धोदक स्नानं समर्पयामि, यज्ञोपवीतं, वस्त्रं, उपवस्त्रं समर्पयामि, आचमनीयं जलं, सुगन्धि द्रव्यं समर्पयामि, चंदनं, कुंकुमं, हरिद्रां, सिंदूरं समर्पयामि, अक्षतान, पुष्पाणि, बिल्वपत्राणि समर्पयामि, धूपं, दीपं, नैवेद्यं निवेदयामि, मध्ये पानीयं, आचमनीयं जलं– ॐ प्राणाय स्वाहा, व्यानाय स्वाहा, अपानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा। उत्तरापोशनं, करोद्वर्तनार्थे चंदनं समर्पयामि, ऋतुफलं, सताम्बूल पूगीफलं, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्य दक्षिणां समर्पयामि, नमस्करोमि।

## प्रार्थनाम्

ॐ न अर्चनं पुण्यतमं शुभप्रदं, जानाम्यहम् धन्यतमाः सुमातराः।
सुरप्रियाः षोडशमातृका मम, भूयासु अज्ञान विनाश कारिकाः।।
**ॐ आयुरारोग्यमैश्वर्यम्, ददध्वं मातरो मम।**
**निर्विघ्नं सर्वकार्येषु, कुरुध्वं सगणाधिपाः।।**
'गृहे वृद्धि शतानि भवन्तु' श्री गौर्यादि षोडश मातृकाभ्यो नमः। प्रार्थना पूर्वकं नमोस्करोमि।
अनया पूजया गौर्यादि षोडशमातृकाः प्रीयन्तां न मम। इति भूमौ जलं क्षिपेत्।।
श्री गौर्यादि षोडश मातृणां पूजन कर्मणो यन्न्यूनादिरिक्तं मातृणां प्रसादात्परिपूर्णमस्तु।।

# श्री सप्तघृत मातृका–सप्तस्थल मातृका–वसोर्द्धारा पूजनम्

## ध्यानम्

ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्त्रधारं। देवस्त्वा सविता पुनातु वसोः
पवित्रेण शतधारेण सुप्वा।।
ॐ भूर्भुवः स्वः श्री वसोर्द्धारा–सप्तघृत मातृकाभ्यां नमः। ध्यानं समर्पयामि।।

## घृत धाराम्

ॐ नमोऽतु वसु मातृभ्यो, घृतमातृभ्य एव च। कर्मण्यस्मिन् सिद्ध्यर्थ, धारां दास्यामि मातराः।।
**'ॐ कामधुक्षः'** श्री श्रियादि सप्तघृतमातृकाभ्यो नमः। घृतधारां समर्पयामि।।

## गुडेन एकीकरणम्

ॐ श्री पूर्वम् सप्तमातृश्च, घृतमातृस्तथैव च। गुडेन मेलयिष्यामि, ताः सर्वार्थ प्रसाधिकाः।।

**आवाहनम् –** ॐ श्रियै नमः। श्रियम् आवाहयामि, स्थापयामि।

ॐ लक्ष्म्यै नमः। लक्ष्मीम् आवाहयामि, स्थापयामि।

ॐ धृत्यै नमः। धृतिम् आवाहयामि, स्थापयामि।

ॐ मेधायै नमः। मेधाम् आवाहयामि, स्थापयामि।

ॐ स्वाहायै नमः। स्वाहाम् आवाहयामि, स्थापयामि।

ॐ प्रज्ञायै नमः। प्रज्ञाम् आवाहयामि, स्थापयामि।

ॐ सरस्वत्यै नमः। सरस्वतीम् आवाहयामि, स्थापयामि।

## सप्तस्थल मातृका

ॐ ब्राह्मयै नमः, ब्राह्मीम् आवाहयामि। ॐ माहेश्वर्यै नमः, माहेश्वरीम् आवाहयामि।

ॐ कौमार्यै नमः, कौमारीम् आवाहयामि। ॐ वैष्णव्यै नमः, वैष्णवीम् आवाहयामि।

ॐ वारायै नमः, वाराहीम् आवाहयामि। ॐ इन्द्राण्यै नमः, इन्द्राणीम् आवाहयामि।

ॐ चामुण्डायै नमः, चामुण्डाम् आवाहयामि।

## प्राण प्रतिष्ठाम्

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ग्वं समिमं दधातु। विश्वेदेवास इह मादयन्तामो 3 प्रतिष्ठ।।

श्री श्रियादि सप्तघृत मातृका–वसोर्धारादेवताः सुप्रतिष्ठिताः वरदा भवन्तु।।

## पूजनम्

पाद्यं, अर्घ्यं, आचमनीयं, सर्वांगे स्नानीयं जलं समर्पयामि, पंचामृत स्नानं, शुद्धोदक स्नानं समर्पयामि, यज्ञोपवीतं, वस्त्रं, उपवस्त्रं समर्पयामि, आचमनीयं जलं, सुगन्धि द्रव्यं समर्पयामि, चंदनं, कुंकुमं, हरिद्रां, सिंदूरं समर्पयामि, अक्षतान, पुष्पाणि, बिल्वपत्राणि समर्पयामि, धूपं, दीपं, नैवेद्यं निवेदयामि, मध्ये पानीयं, आचमनीयं जलं– ॐ प्राणाय स्वाहा, व्यानाय स्वाहा,अपानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा। उत्तरापोशनं, करोद्वर्तनार्थे चंदनं समर्पयामि, ऋतुफलं, सताम्बूल पूगीफलं, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्य दक्षिणां समर्पयामि, नमस्करोमि।

## प्रार्थनाम्

ॐ श्रव्यादि देव्यः सदा पूज्या, सप्त वै घृतमातरः।
कल्याणानि प्रयच्छन्तु, सकुटुम्बस्य मे सदा।।
ॐ यदंगत्वेन भो देव्यः, पूजिता विधिमार्गतः।कुर्वन्तु कार्यमखिलं, निर्विघ्नेन क्रतूद्‌भवम्।।
श्री सप्तघृत मातृका एवं वसोर्धारा देवताभ्यो नमः, प्रार्थना पूर्वकं नमस्करोमि।
अनया पूजया वसोर्धारा–सप्तघृतमातृकाः प्रीयन्तां न मम।इति भूमौ जलं क्षिपेत्।।
श्री वसोर्धारा–सप्तघृत मातृणां पूजन कर्मणो यन्न्यूनादिरिक्तं मातृणां प्रसादात्परिपूर्णमस्तु।।

## श्री नान्दीमुख श्राद्धम्

### संकल्पः (नान्दीमुख श्राद्ध पूर्वाभिमुख सव्य होकर करें)

ॐ अद्येत्यादि देशकालौ संकीर्त्य कर्तव्य.......कर्मांगत्वेन सांकल्पिकेन विधिना ब्राम्हण युग्म भोजन पर्याप्तान्न निष्क्रयीभूत यथा शक्ति हिरण्येन नान्दीमुख श्राद्धम् अहम् करिष्ये।

## प्रार्थनाम्

ॐ देवताभ्यः पितृभ्यश्च, महायोगिभ्य एव च।नमः स्वाहायै स्वधायै, नित्यमेव नमो नमः।।
श्राद्धकाले गयां ध्यात्वा, ध्यात्वा देवं गदाधरम्। मनसा च पितृन् ध्यात्वा, नान्दीश्राद्धं समारभे।। **(त्रिवारम्)**

**दक्षिणोत्तर क्रमेण पलाशपत्रेषु द्वादस कुशकाण्डानि संस्थाप्य।**

**पादप्रक्षालनार्थे दूर्वा-यव जलान्यादाय-**

ॐ अद्य मात्रादि त्रय श्राद्ध संबन्धिनो नान्दीमुखाः सत्यवसुसंज्ञकाः विश्वेदेवाः
ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः।
ॐ अद्य पित्रादि त्रय श्राद्ध संबन्धिनो नान्दीमुखाः सत्यवसुसंज्ञकाः विश्वेदेवाः
ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः।
ॐ अद्य सपत्नीक मातामहादि त्रय श्राद्ध संबन्धिनो नान्दीमुखाः सत्यवसु संज्ञकाः विश्वेदेवाः
ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः श्रियै ।
ॐ अद्य......गोत्रे नान्दीमुखि गायत्री स्वरूपिणी मातृ......देवि ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः श्रियै।
ॐ अद्य......गोत्रे नान्दीमुखि सावित्री स्वरूपिणी पितामही......देवि ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः श्रियै।

ॐ अद्य......गोत्रे नान्दीमुखि सरस्वती स्वरूपिणी प्रपितामही......देवि ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः श्रियै।

ॐ अद्य......गोत्रे नान्दीमुख वसु स्वरूप पितृ......शर्मणः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः श्रियै।

ॐ अद्य......गोत्रे नान्दीमुख रुद्र स्वरूप पितामह......शर्मणः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः श्रियै।

ॐ अद्य......गोत्रे नान्दीमुख आदित्य स्वरूप प्रपितामह......शर्मणः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः श्रियै।

ॐ अद्य......गोत्रे नान्दीमुख वसु स्वरूप सपत्नीक मातामह......शर्मणः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः श्रियै।

ॐ अद्य......गोत्रे नान्दीमुख रुद्र स्वरूप सपत्नीक प्रमातामह......शर्मणः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः श्रियै।

ॐ अद्य.....गोत्रे नान्दीमुख आदित्य स्वरूप सपत्नीक वृद्धप्रमातामह.....शर्मणः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पाद प्रक्षालनं वृद्धिः श्रियै।

## आसन दानम्

ॐ सत्यवसु संज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः। नान्दीश्राद्धे क्षणौ क्रियेताम्।ॐ तथा प्राप्नुतां भवन्तौ प्राप्नवाव।।

ॐ......गोत्राणां मातृ–पितामही–प्रपितामहीनां नान्दीमुखीनां ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः। नान्दीश्राद्धे क्षणौ क्रियेताम्।ॐ तथा प्राप्नुतां भवन्तौ प्राप्नवाव।।

ॐ......गोत्राणां पितृ–पितामह–प्रपितामहानां नान्दीमुखानां ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः।नान्दीश्राद्धे क्षणौ क्रियेताम्।ॐ तथा प्राप्नुतां भवन्तौ प्राप्नवाव।।

ॐ.......गोत्राणां मातामह–प्रमातामह– वृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानां

ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः।नान्दीश्राद्धे क्षणौ क्रियेताम्।

ॐ तथा प्राप्नुतां भवन्तौ प्राप्नवाव।।

## गंधादि दानम्

ॐ अत्रापः पान्तु, इदं यज्ञोपवीतं, इमे वाससी, एष वो गंधः, इमे अक्षताः, इमानि पुष्पाणि, अयं धूपः, अयं दीपः, इदं नैवेद्यं, इदं फलं, इदं ताम्बूलम्।।

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गंधाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः।

ॐ .......गोत्रेभ्यो मातृ–पितामही–प्रपितामहीभ्यो नान्दीमुखीभ्यः ॐ भूर्भुवः स्वः इदं गंधाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः।

ॐ .......गोत्रेभ्यः पितृ–पितामह–प्रपितामहेभ्यो नान्दीमुखेभ्यः ॐ भूर्भुवः स्वः इदं गंधाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः।

ॐ .......गोत्रेभ्यो मातामह–प्रमातामह– वृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः नान्दीमुखेभ्यः ॐ भूर्भुवः स्वः इदं गंधाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः।

## भोजन निष्क्रय द्रव्य दानम्

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्म ब्राम्हण भोजन पर्याप्तं दास्यमानम् अन्नं वा निष्क्रयभूतं द्रव्यम् अमृतरूपेण स्वाहा सम्पद्यतां वृद्धिः।

ॐ .......गोत्रा मातृ–पितामही–प्रपितामह्यो नान्दीमुख्यः ॐ भूर्भुवः स्वः इदं युग्म ब्राम्हण भोजन पर्याप्तं दास्यमानम् अन्नं वा निष्क्रयभूतं द्रव्यम् अमृत रूपेण स्वाहा सम्पद्यतां वृद्धिः।

ॐ .......गोत्राः पितृ–पितामह–प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्म ब्राम्हण भोजन पर्याप्तं दास्यमानम् अन्नं वा निष्क्रयभूतं द्रव्यम् अमृत रूपेण स्वाहा सम्पद्यतां वृद्धिः।

ॐ .......गोत्राः मातामह–प्रमातामह–वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्म ब्राम्हण भोजन पर्याप्तं दास्यमानम् अन्नं वा निष्क्रयभूतं द्रव्यम् अमृत रूपेण स्वाहा सम्पद्यतां वृद्धिः।

## यव–सक्षीर–जल दानम्

ॐ सत्यवसु संज्ञकाः नान्दीमुखाः विश्वेदेवाः प्रीयन्ताम्।

ॐ मातृ–पितामही–प्रपितामह्यो नान्दीमुख्यः प्रीयन्ताम्।

ॐ पितृ–पितामह–प्रपितामहाः नान्दीमुखाः प्रीयन्ताम्।

ॐ मातामह–प्रमातामह–वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः प्रीयन्ताम्।

**ॐ अघोराः पितरः सन्तु'** इति मंत्रेण पूर्वाग्रां जलधारां दद्यात्।

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः। स्वस्तिनस्ताक्ष्र्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्द् दधातु।।

## आशीर्ग्रहणम्

यजमानः– ॐ गोत्रन्नो वर्धताम्। बिप्राः– ॐ वर्धताम् वो गोत्रम्।

यजमानः– ॐ दातारो नोऽभि वर्धन्ताम्। बिप्राः– ॐ वर्धन्ताम् वो दातारः।

यजमानः– ॐ वेदाश्च नोऽभि वर्धन्ताम्। बिप्राः– ॐ वर्धन्ताम् वो वेदाः।

यजमानः– ॐ सन्ततिर्नोऽभि वर्धन्ताम्। बिप्राः– ॐ वर्धन्ताम् वा सन्ततिः।

यजमानः– ॐ श्रद्धा च नो मा व्यपगमद्। बिप्राः– ॐ मा व्यपगमद्वः श्रद्धा।

यजमानः– ॐ बहु देयम् च नोऽस्तु। बिप्राः– ॐ अस्तु वो बहु देयम्।

यजमानः– ॐ अन्नं च नो बहु भवेत्। बिप्राः– ॐ बहु भवेद्वोऽन्नम्।

यजमानः– ॐ अतिथींश्च लभामहै। बिप्राः– ॐ लभन्ताम् वा अतिथयः।

यजमानः– ॐ याचितारश्च नः सन्तु। बिप्राः– ॐ सन्तु वो याचितारः।

यजमानः– ॐ एता आशिषः सत्याः सन्तु। बिप्राः– ॐ सन्त्वेताः सत्या आशिषः।

## दक्षिणा दानम्

ॐ सत्यवसु संज्ञकाः नान्दीमुखाः भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फल प्रतिष्ठा सिद्ध्यर्थम् द्राक्ष अमलक यव मूल निष्क्रयीभूतां दक्षिणां दातुम् अहम् उत्सृजे।

ॐ .......गोत्रेभ्यो मातृ–पितामही–प्रपितामहीभ्यो नान्दीमुखीभ्यः भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फल प्रतिष्ठा सिद्ध्यर्थम् द्राक्ष अमलक यव मूल निष्क्रयीभूतां दक्षिणां दातुम् अहम् उत्सृजे।

ॐ .......गोत्रेभ्यः पितृ–पितामह–प्रपितामहेभ्यो नान्दीमुखेभ्यः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फल प्रतिष्ठा सिद्ध्यर्थम् द्राक्ष अमलक यव मूल निष्क्रयीभूतां दक्षिणां दातुम् अहम् उत्सृजे।

ॐ .......गोत्रेभ्यो मातामह–प्रमातामह– वृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः नान्दीमुखेभ्यः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फल प्रतिष्ठा सिद्ध्यर्थम् द्राक्ष अमलक यव मूल निष्क्रयीभूतां दक्षिणां दातुम् अहम् उत्सृजे।

## प्रार्थनाम्

**ॐ माता पितामही चैव, तथैव प्रपितामही।**

**पिता पितामहश्चैव, तथैव प्रपितामहः।।**

**मातामहस्तत्पिता च, प्रमातामहकादयः। एते भवन्तु मे प्रीताः, प्रयच्छन्तु सुमंगलम्।।**

**यजमानः-** ॐ नान्दीश्राद्धम् सम्पन्नम्। **बिप्राः-** सुसम्पन्नम्।।

## विसर्जनम्

ॐ वाजे वाजे वत वाजिनो नो धनेषु बिप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः।।

ॐ आ मा वाजस्य प्रसवो जगम्या देमे द्यावा पृथिवी विश्वरूपे। आ मा गन्तां पितरा मातरा चा मा सोमोऽअमृतत्वेन गम्यात्।।

**हस्ते जलमादाय-** ॐ मया आचारिते अस्मिन् सांकल्पिकनान्दीश्राद्धे
न्यूनातिरिक्तो यो विधिः स उपविष्ट ब्राम्हणानां बचनात्
श्री गणेश एवं पितृ प्रसादाच्च सर्वः परिपूर्णोऽस्तु।।

**बिप्राः-** अस्तु परिपूर्णः।। ॐ विष्णवे नमः– ॐ विष्णवे नमः– ॐ विष्णवे नमः।।

# आचार्यादि वरणम्

## संकल्पः

ॐ अद्येत्यादि देशकालौ संकीर्त्य कर्तव्ये......गोत्रेभ्यो..... शर्मणाः आचार्यादि ब्राम्हणेभ्यो........ यागाख्ये कर्मणि दास्यमानैः एभिर्वरण द्रव्यैः आचार्यत्वेन ब्रम्हत्वेन ऋत्विक्त्वेन त्वाम् अहम् वृणे।

## प्रार्थनाम्

ॐ आचार्यस्तु यथा स्वर्गे, शक्रादीनां बृहस्पतिः। तथा त्वं मम यज्ञेस्मिन्, आचार्यो भव सुव्रतः।।

ॐ यथा चतुर्मुखो ब्रम्हा, सर्वलोक पितामहः। तथा त्वं मम यज्ञेस्मिन्, ब्रम्हा भव द्विजोत्तमः।।

ॐ भगवन् सर्व धर्मज्ञ, सर्व धर्म परायणः। वितते मम यज्ञेस्मिन्, ऋत्विक् त्वं मे मखे भव।।

ॐ अस्य यागस्य निष्पत्तौ, भवन्तः अभ्यर्चिता मया। सुप्रसन्नैः प्रकर्तव्यं, कर्मेदं विधि पूर्वकम्।।

### आचार्यादि दक्षिण हस्ते रक्तसूत्र रूप कंकण बन्धनम्-तिलकम्

ॐ व्रतेन दीक्षामाप्नोति, दीक्षयाप्नोति दक्षिणाम्। दक्षिणा श्रद्धामाप्नोति, श्रद्धया सत्यमाप्यते।।

ॐ नमो ब्राम्हण्य देवाय, गो ब्राम्हण्य हिताय च।जगद्धिताय कृष्णाय, गोविन्दाय नमो नमः।।

## यजमान हस्ते कंकण बन्धनम्

ॐ यदाबध्नन् दाक्षायणा हिरण्य ग्वं शतानीकाय सुमनस्यमानाः। तन्म आबध्नामि शत शारदाय आयुष्मान् जरदष्टिः यथासम्।

ॐ येन बद्धो बली राजा, दानवेन्द्रो महाबलः।तेन त्वां प्रति बध्नामि, रक्षे मा चल मा चल।।

# श्री चतुःषष्टि योगिनी पूजनम्

## ध्यानम्

ॐ योगे योगे तवस्तरं वाजे वाजे हवामहे।सखाय इन्द्रमूतये।।

ॐ दिव्य कुंडल संकाशा, दिव्य ज्वाला त्रिलोचना।मूर्तिमती ह्यमूर्ता च, उग्रा चैवोग्ररूपिणी।।

**अनेक भाव संयुक्ता, संसारार्णव तारिणी। यज्ञे कुर्वन्तु निर्विघ्नं, श्रेयो यच्छन्तु मातरः।।**

## आवाहनम्

**ॐ आवाहयाम्यहम् देवीं, योगिनीं परमेश्वरीम्। योगाभ्यासेन संतुष्टा, परं ध्यान समन्विता।।**

ॐ भूर्भुवः स्वः महाकाल्यै नमः।महाकालीम् आवाहयामि, स्थापयामि।

ॐ भूर्भुवः स्वः महालक्ष्म्यै नमः। महालक्ष्मीम् आवाहयामि, स्थापयामि।

ॐ भूर्भुवः स्वः महासरस्वत्यै नमः। महासरस्वतीम् आवाहयामि, स्थापयामि।

ॐ गजाननायै नमः। गजाननीम् आवाहयामि, स्थापयामि।।

ॐ सिंहमुख्यै नमः। सिंहमुखीम् आवाहयामि, स्थापयामि।।

ॐ गृधास्यायै नमः। गृधास्यीम् आवाहयामि, स्थापयामि।।

ॐ काकतुण्डिकायै नमः। काकतुण्डिकीम् आवाहयामि, स्थापयामि।।

ॐ उष्ट्ग्रीवायै नमः। उष्टग्रीवाम् आवाहयामि, स्थापयामि।।

ॐ हयग्रीवायै नमः। हयग्रीवाम् आवाहयामि, स्थापयामि।।

ॐ वाराह्यै नमः। वाराहीम् आवाहयामि, स्थापयामि।।

ॐ शरभाननायै नमः। शरभाननीम् आवाहयामि, स्थापयामि।।

ॐ उलूकिकायै नमः। उलूकिकीम् आवाहयामि, स्थापयामि।।

ॐ शिवारवायै नमः। शिवारवीम् आवाहयामि, स्थापयामि।।

ॐ मयूर्यै नमः। मयूरीम् आवाहयामि, स्थापयामि।।

ॐ विकटाननायै नमः। विकटाननीम् आवाहयामि, स्थापयामि।।

ॐ अष्टवक्रायै नमः। अष्टवक्रीम् आवाहयामि, स्थापयामि।।

ॐ कोटराक्ष्यै नमः। कोटराक्षीम् आवाहयामि, स्थापयामि।।

ॐ कुब्जायै नमः। कुब्जाम् आवाहयामि, स्थापयामि।।

ॐ विकटलोचनायै नमः। विकटलोचनीम् आवाहयामि, स्थापयामि।।

ॐ शुष्कोदर्यै नमः। शुष्कोदरीम् आवाहयामि, स्थापयामि।।

ॐ ललजिव्हायै नमः। ललजिव्हाम् आवाहयामि, स्थापयामि।।

ॐ स्वदंष्टायै नमः। स्वदंष्टाम् आवाहयामि, स्थापयामि।।

ॐ वानराननायै नमः। वानराननीम् आवाहयामि, स्थापयामि।।

ॐ रुक्षाक्ष्यै नमः। रुक्षाक्षीम् आवाहयामि, स्थापयामि।।

ॐ केकराक्ष्यै नमः। केकराक्षीम् आवाहयामि, स्थापयामि।।

ॐ बृहत्तुण्डायै नमः। बृहत्तुण्डीम् आवाहयामि, स्थापयामि।।

ॐ सुराप्रियायै नमः। सुराप्रियाम् आवाहयामि, स्थापयामि।।

ॐ कपालहस्तायै नमः। कपालहस्ताम् आवाहयामि, स्थापयामि।।

ॐ रक्ताक्ष्यै नमः। रक्ताक्षीम् आवाहयामि, स्थापयामि।।

ॐ शुक्यै नमः। शुकीम् आवाहयामि, स्थापयामि।।

ॐ श्येन्यै नमः। श्येनीम् आवाहयामि, स्थापयामि।।

ॐ कपोतिकायै नमः। कपोतिकीम् आवाहयामि, स्थापयामि।।

ॐ पाशहस्तायै नमः। पाशहस्ताम् आवाहयामि, स्थापयामि।।

ॐ दण्डहस्तायै नमः। दण्डहस्ताम् आवाहयामि, स्थापयामि।।

ॐ प्रचण्डायै नमः। प्रचण्डीम् आवाहयामि, स्थापयामि।।

ॐ चण्डविक्रमायै नमः। चण्डविक्रमाम् आवाहयामि, स्थापयामि।।

ॐ शिशुघ्न्यै नमः। शिशुघ्नीम् आवाहयामि, स्थापयामि।।
ॐ पापहन्त्र्यै नमः। पापहन्त्रीम् आवाहयामि, स्थापयामि।।
ॐ काल्यै नमः। कालीम् आवाहयामि, स्थापयामि।।
ॐ रुधिरपायिन्यै नमः। रुधिरपायिनीम् आवाहयामि, स्थापयामि।।
ॐ वसाधयायै नमः। वसाधयीम् आवाहयामि, स्थापयामि।।
ॐ गर्भभक्षायै नमः। गर्भभक्षीम् आवाहयामि, स्थापयामि।।
ॐ शवहस्तायै नमः। शवहस्ताम् आवाहयामि, स्थापयामि।।
ॐ आन्त्रमालिन्यै नमः। आन्त्रमालिनीम् आवाहयामि, स्थापयामि।।
ॐ स्थूलकेश्यै नमः। स्थूलकेशनीम् आवाहयामि, स्थापयामि।।
ॐ बृहत्कुक्ष्यै नमः। बृहत्कुक्षीम् आवाहयामि, स्थापयामि।।
ॐ सर्पास्यायै नमः। सर्पास्यनीम् आवाहयामि, स्थापयामि।।
ॐ प्रेतवाहनायै नमः। प्रेतवाहनीम् आवाहयामि, स्थापयामि।।
ॐ दन्दशूककरायै नमः। दन्दशूककरीम् आवाहयामि, स्थापयामि।।
ॐ क्रौन्च्यै नमः। क्रौन्चीम् आवाहयामि, स्थापयामि।।
ॐ मृगशीर्षायै नमः। मृगशीर्षाम् आवाहयामि, स्थापयामि।।
ॐ बृषाननायै नमः। बृषाननीम् आवाहयामि, स्थापयामि।।
ॐ व्यात्तास्यायै नमः। व्यात्तासनीम् आवाहयामि, स्थापयामि।।
ॐ धूमनिःश्वासायै नमः। धूमनिःश्वासनीम् आवाहयामि, स्थापयामि।।
ॐ व्योमैकचरणोर्ध्वदृशे नमः। व्योमैकचरणोर्ध्वदृशीम् आवाहयामि, स्थापयामि।।
ॐ तापिन्यै नमः। तापनीम् आवाहयामि, स्थापयामि।।
ॐ शोषणीदृष्ट्यै नमः। शोषणीदृष्टीम् आवाहयामि, स्थापयामि।।
ॐ कोटर्यै नमः। कोटरीम् आवाहयामि, स्थापयामि।।
ॐ स्थूलनाशिकायै नमः। स्थूलनाशिकाम् आवाहयामि, स्थापयामि।।
ॐ विद्युत्प्रभायै नमः। विद्युत्प्रभाम् आवाहयामि, स्थापयामि।।
ॐ बलाकास्यायै नमः। बलाकास्यीम् आवाहयामि, स्थापयामि।।

ॐ मार्जायै नमः। मार्जरीम् आवाहयामि, स्थापयामि।।

ॐ कटपूतनायै नमः। कटपूतनाम् आवाहयामि, स्थापयामि।।

ॐ अट्टाट्टहासायै नमः। अट्टाट्टहासनीम् आवाहयामि, स्थापयामि।।

ॐ कामाक्ष्यै नमः। कामाक्षीम् आवाहयामि, स्थापयामि।।

ॐ मृगाक्ष्यै नमः। मृगाक्षीम् आवाहयामि, स्थापयामि।।

ॐ मृगलोचनायै नमः। मृगलोचनीम् आवाहयामि, स्थापयामि।।

**ॐ श्री महाकाली-महालक्ष्मी-महासरस्वती सहित गजाननादि चतुःषष्टि योगिनीभ्यो नमः। आवाहयामि, स्थापयामि, पूजयामि।**

## कलश स्थापनम्

ॐ तत्वा यामि ब्रम्हणा वन्दमानस्त दाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश ग्वं स मा न आयुः प्रमोषीः।।

अस्मिन् चतुःषष्टि योगिनी कलशे वरुणम् आवाहयामि, स्थापयामि।

## प्राण प्रतिष्ठाम्

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ग्वं समिमं दधातु। विश्वेदेवास इह मादयन्तामो 3 प्रतिष्ठ।।

श्री चतुःषष्टि योगिन्याः सुप्रतिष्ठिता वरदा भवन्तु।।

## पूजनम्

पाद्यं, अर्घ्य, आचमनीयं, सर्वांगे स्नानीयं जलं समर्पयामि, पंचामृत स्नानं, शुद्धोदक स्नानं समर्पयामि, यज्ञोपवीतं, वस्त्रं, उपवस्त्रं समर्पयामि, आचमनीयं जलं, सुगन्धि द्रव्यं समर्पयामि, चंदनं, कुंकुमं, हरिद्रां, सिंदूरं समर्पयामि, अक्षतान, पुष्पाणि, बिल्वपत्राणि समर्पयामि, धूपं, दीपं, नैवेद्यं निवेदयामि, मध्ये पानीयं, आचमनीयं जलं– प्राणाय स्वाहा, व्यानाय स्वाहा, अपानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा। उत्तरापोशनं, करोद्वर्तनार्थे चंदनं समर्पयामि, ऋतुफलं, सताम्बूल पूगीफलं, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्य दक्षिणां समर्पयामि, नमस्करोमि।

## प्रार्थनाम्

ॐ योगिन्याः शक्ति सम्पन्नः, नाना रूपाः सुमंगलाः।महाशक्ति धरादेव्यः, मखरक्षां कुरुष्व मे।।

चतु:षष्टि समाख्याता, योगिन्यो हि वरप्रदा:।त्रैलोक्य पूजिता नित्यं, देव मानुष योगिभि:।।
श्री चतु:षष्टि योगिनिभ्यो नम:, प्रार्थना पूर्वकं नमस्करोमि।
अनया पूजया श्री महाकाली–महालक्ष्मी–महासरस्वती सहित गजाननादि चतु:षष्टि योगिन्या: प्रीयन्तां न मम। इति भूमौ जलं क्षिपेत्।।

**श्री महाकाली-महालक्ष्मी-महासरस्वती सहित गजाननादि चतु:षष्टि योगिन्या: पूजन कर्मणो यन्न्यूनादिरिक्तं योगिनी प्रसादात्परिपूर्णमस्तु।।**

## श्री नवग्रह पूजनम्

### ध्यानम्

ॐ ग्रहा ऊर्जाहुतयो व्यन्तो विप्राय मतिम्। तेषां विशिप्रियाणां वोऽहमिषमूर्ज ग्वं समग्रभमुपयाम गृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्।।
ॐ ब्रम्हा मुरारिस्त्रिपुरान्तकारी, भानु: शशी भूमिसुतो बुधश्च।
गुरुश्च शुक्र: शनि राहु केतव:, सर्वे ग्रहा: शान्तिकरा भवन्तु।।
ॐ भूर्भुव: स्व: सांगेभ्य: सपरिवारेभ्य: सायुधेभ्य: सशक्तिकेभ्य: अधिदेवता प्रत्यधि देवता विनायकादि पंचलोकपाल वास्तोष्पति क्षेत्राधिपति इन्द्रादि दशदिक्पाल सहितेभ्यो नवग्रहेभ्यो नम:।ध्यानम् समर्पयामि।

### नवग्रह आवाहनम्

ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यन्च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्।।
ॐ भूर्भुव: स्व: कलिंग देशोद्भव काश्यप गोत्र रक्तवर्ण भो सूर्य! इहागच्छ इह तिष्ठ।
ॐ सूर्याय नम:। सूर्यम् आवाहयामि, स्थापयामि।
ॐ इमं देवा असपत्न ग्वं सुबध्वं महते क्षत्राय महते ज्यैष्ठयाय महते जान राज्याय इन्द्रस्य इन्द्रियाय इमममुष्य पुत्रममुष्यै पुत्रमष्यै विश एष वोमी राजा सोमोऽस्माकं ब्राम्हणाना ग्वं राजा।।
ॐ भूर्भुव: स्व: यमुना तीरोद्भव आत्रेय गोत्र शुक्लवर्ण भो सोम! इहागच्छ इह तिष्ठ।

ॐ सोमाय नमः। सोमम् आवाहयामि, स्थापयामि।

ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपा ग्वं रेता ग्वं सि जिन्वति।।

ॐ भूर्भुवः स्वः अवन्तिकापुरोद्भव भरद्वाज गोत्र रक्तवर्ण भो भौम! इहागच्छ इह तिष्ठ।

ॐ भौमाय नमः। भौमम् आवाहयामि, स्थापयामि।

ॐ उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टा पूर्ते स ग्वं सृजेथामयं च। अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत।।

ॐ भूर्भुवः स्वः मगध देशोद्भव आत्रेय गोत्र हरितवर्ण भो बुध! इहागच्छ इह तिष्ठ।

ॐ बुधाय नमः। बुधम् आवाहयामि, स्थापयामि।

ॐ बृहस्पते अति यदर्यो अर्हाद्युमद् विभाति क्रतुमज्जनेषु। यद्दी दयच्छ वस ऋत प्रजात तदस्मासु द्रविणं धेहि चित्रम्।।

ॐ भूर्भुवः स्वः सिन्धु देशोद्भव आंगिरस गोत्र पीतवर्ण भो बृहस्पति! इहागच्छ इह तिष्ठ।

ॐ बृहस्पतये नमः। बृहस्पतिम् आवाहयामि, स्थापयामि।

ॐ अन्नात् परिस्त्रुतो रसं ब्रम्हणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपान ग्वं शुक्रमन्धस इन्द्रस्य इन्द्रियमिदं पयो मृतं मधु।।

ॐ भूर्भुवः स्वः भोजकट देशोद्भव भार्गव गोत्र श्वेतवर्ण भो शुक्र! इहागच्छ इह तिष्ठ।

ॐ शुक्राय नमः। शुक्रम् आवाहयामि, स्थापयामि।

ॐ शं नो देवीरभिष्टय आपो भवन्तु पीतये। शं योरभिस्त्रवन्तु नः।।

ॐ भूर्भुवः स्वः सौराष्ट् देशोद्भव काश्यप गोत्र कृष्णवर्ण भो शनैश्चर! इहागच्छ इह तिष्ठ।

ॐ शनैश्चराय नमः। शनैश्चरम् आवाहयामि, स्थापयामि।

ॐ कया नश्चित्र आभुव दूती सदा वृधः सखा। कया शचिष्ठया वृता।।

ॐ भूर्भुवः स्वः राठिन देशोद्भव पैठिनसी गोत्र कृष्णवर्ण भो राहो! इहागच्छ इह तिष्ठ।

ॐ राहवे नमः। राहुम् आवाहयामि, स्थापयामि।

ॐ केतुं कृण्वन्न केतवे पेशो मर्या अपेशसे। समुषद्भिरजा यथाः।।

ॐ भूर्भुवः स्वः अन्तर्वेदि समुद्भव जैमिनी गोत्र कृष्णवर्ण भो केतो! इहागच्छ इह तिष्ठ।

ॐ केतवे नमः। केतुम् आवाहयामि, स्थापयामि।

## अधिदेवता आवाहनम् (ग्रह दक्षिण पार्श्वे)

ॐ ईश्वराय नमः। ईश्वरम् आवाहयामि, स्थापयामि।

ॐ उमायै नमः। उमाम् आवाहयामि, स्थापयामि।

ॐ स्कन्दाय नमः। स्कन्दम् आवाहयामि, स्थापयामि।

ॐ विष्णवे नमः। विष्णुम् आवाहयामि, स्थापयामि।

ॐ ब्रम्हणे नमः। ब्रम्हाणम् आवाहयामि, स्थापयामि।

ॐ इन्द्राय नमः। इन्द्रम् आवाहयामि, स्थापयामि।

ॐ यमाय नमः। यमम् आवाहयामि, स्थापयामि।

ॐ कालाय नमः। कालम् आवाहयामि, स्थापयामि।

ॐ चित्रगुप्ताय नमः। चित्रगुप्तम् आवाहयामि, स्थापयामि।

## प्रत्यधिदेवता आवाहनम् (ग्रह वाम पार्श्वे)

ॐ अग्नये नमः। अग्निम् आवाहयामि, स्थापयामि।

ॐ अद्भ्यो नमः। अपः आवाहयामि, स्थापयामि।

ॐ पृथिव्यै नमः। पृथिवीम् आवाहयामि, स्थापयामि।

ॐ विष्णवे नमः। विष्णुम् आवाहयामि, स्थापयामि।

ॐ इन्द्राय नमः। इन्द्रम् आवाहयामि, स्थापयामि।

ॐ इन्द्राण्यै नमः। इन्द्राणीम् आवाहयामि, स्थापयामि।

ॐ प्रजापतये नमः। प्रजापतिम् आवाहयामि, स्थापयामि।

ॐ सर्पेभ्यो नमः। सर्पान् आवाहयामि, स्थापयामि।

ॐ ब्रम्हणे नमः। ब्रम्हाणम् आवाहयामि, स्थापयामि।

## पंचलोकपाल देवता आवाहनम्

**राहोरुत्तरतः**- ॐ गणपतये नमः। गणपतिम् आवाहयामि, स्थापयामि।

**शनेरुत्तरतः**- ॐ दुर्गायै नमः। दुर्गाम् आवाहयामि, स्थापयामि।

**रवेरुत्तरतः**- ॐ वायवे नमः। वायुम् आवाहयामि, स्थापयामि।

**राहोर्दक्षिणे**- ॐ आकाशाय नमः। आकाशम् आवाहयामि, स्थापयामि।

**केतोर्दक्षिणे**- ॐ अश्विभ्याम् नमः। अश्विनौ आवाहयामि, स्थापयामि।

## ग्रहाणां मध्ये

ॐ वास्तोष्पते नमः।वास्तोष्पतिम् आवाहयामि, स्थापयामि।

ॐ क्षेत्राधिपतये नमः।क्षेत्राधिपतिम् आवाहयामि, स्थापयामि।

## दशदिक्पाल देवता आवाहनम्

**पूर्वे-** ॐ इन्द्राय नमः।इन्द्रम् आवाहयामि, स्थापयामि।

**आग्नेयाम्-** ॐ अग्नये नमः।अग्निम् आवाहयामि, स्थापयामि।

**दक्षिणे-** ॐ यमाय नमः।यमम् आवाहयामि, स्थापयामि।

**नैर्ऋत्याम्-** ॐ नैर्ऋते नमः।नैर्ऋत्याम् आवाहयामि, स्थापयामि।

**पश्चिमे-** ॐ वरुणाय नमः।वरुणम् आवाहयामि, स्थापयामि।

**वायव्याम्-** ॐ वायवे नमः।वायुम् आवाहयामि, स्थापयामि।

**उत्तरे-** ॐ सोमाय नमः।सोमम् आवाहयामि, स्थापयामि।

**ईशान्याम्-** ॐ ईश्वराय नमः।ईश्वरम् आवाहयामि, स्थापयामि।

**पूर्व-ईशानयोर्मध्ये-** ॐ ब्रम्हणे नमः।ब्रम्हाणम् आवाहयामि, स्थापयामि।

**नैर्ऋत्य-पश्चिमयोर्मध्ये-** ॐ अनंताय नमः।अनंतम् आवाहयामि, स्थापयामि।

ॐ भूर्भुवः स्वः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः अधिदेवता प्रत्यधि देवता विनायकादि पंचलोकपाल वास्तोष्पति क्षेत्राधिपति इन्द्रादि दशदिक्पाल सहितेभ्यो नवग्रहेभ्यो नमः।आवाहयामि, स्थापयामि, पूजयामि।

## कलश स्थापनम्

ॐ तत्वा यामि ब्रम्हणा वन्दमानस्त दाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश ग्वं स मा न आयुः प्रमोषीः।।अस्मिन् नवग्रह कलशे वरुणम् आवाहयामि, स्थापयामि।

## प्राण प्रतिष्ठाम्

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ग्वं समिमं दधातु। विश्वेदेवास इह मादयन्तामो 3 प्रतिष्ठ।।श्री सूर्यादि अनन्तान्त देवताः सुप्रतिष्ठिताः वरदा भवन्तु।।

## पूजनम्

पाद्यं, अर्घ्य, आचमनीयं, सर्वांगे स्नानीयं जलं समर्पयामि, पंचामृत स्नानं, शुद्धोदक स्नानं समर्पयामि, यज्ञोपवीतं, वस्त्रं, उपवस्त्रं समर्पयामि, आचमनीयं जलं, सुगन्धि द्रव्यं

समर्पयामि, चंदनं, कुंकुमं, हरिद्रां, सिंदूरं समर्पयामि, अक्षतान, पुष्पाणि, दुर्वांकुरान्, बिल्वपत्राणि समर्पयामि, धूपं, दीपं, नैवेद्यं निवेदयामि, मध्ये पानीयं, आचमनीयं जलं– ॐ प्राणाय स्वाहा, व्यानाय स्वाहा, अपानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा। उत्तरापोशनं, करोद्वर्तनार्थे चंदनं समर्पयामि, ऋतुफलं, सताम्बूल पूगीफलं, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्य दक्षिणां समर्पयामि, नमस्करोमि।

**प्रार्थनाम् :** ॐ सूर्यः सौर्यमथेन्दुरुच्च पदवीम्, सन्मंगलम् मंगलः।

सद्बुद्धिम् च बुधो गुरुश्च गुरुताम्, शुक्रः सुखम् शं शनिः।।

राहुर्बाहुबलम् करोतु सततम्, केतुः कुलस्योन्नतिम्।

नित्यम् प्रीतिकरा भवन्तु मम ते, सर्वेऽनुकूला ग्रहाः।।

ॐ यत्कृतं पूजनं देवाः, भक्ति श्रद्धा विवर्जितम्। परिगृह्णन्तु तत्सर्वम्, सूर्याद्या ग्रह नायकाः।।

ॐ आयुश्च वितन्च तथा सुखन्च, धर्मार्थ लाभौ बहु पुत्रतां च।

शत्रुक्षयम् राजसु पुत्रतान्च, तुष्टा ग्रहाः क्षेमकरा भवन्तु।।

ॐ आदित्यादि ग्रहाः सर्वे, नाना वर्णाः पृथग्विधाः।सुप्रसन्नाः प्रयच्छन्तु, सौभाग्यम् मम सर्वदा।।

ॐ इन्द्रादि दशदिक्पालाः, सायुधाश्च सवाहनाः।ब्रम्हाविष्णु शिवैः सार्धम्, रक्षां कुर्वन्तु सर्वतः।।

श्री सूर्यादि अनन्तान्त देवताभ्यो नमः, प्रार्थना पूर्वकं नमस्करोमि।

ॐ अनया पूजया श्री सूर्यादि अनन्तान्त देवताः प्रीयन्तां न मम। इति भूमौ जलं क्षिपेत्।।

**श्री सूर्यादि अनन्तान्तदेवताः पूजनकर्मणो यन्न्यूनादिरिक्तं नवग्रह प्रसादात्परिपूर्णमस्तु।।**

## श्री वास्तुमंडल देवता पूजनम्

**ध्यानम् –** ॐ वास्तोष्पते प्रतिजानीह्यस्मान् स्वावेशो अनमीवाभवो नः। यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे।।

ॐ नमो भगवते वास्तुपुरुषाय महाबल पराक्रमाय सर्वदेवाधिवास आश्रित शरीराय ब्रम्हपुत्राय सकल ब्रम्हाण्ड धारणे भूभारार्पित मस्तकाय पुरपत्तन प्रसाद गृह वापी सरः कूपादि सन्निवेश सान्निध्यकराय सर्व सिद्धिप्रदाय विश्वम्भराय परमपुरुषाय शक्रवरदाय वास्तोष्पते नमस्ते नमस्ते।। ॐ भूर्भुवः स्वः शिखिनादि वास्तुमंडल देवता सहिताय वास्तुपुरुषाय नमः। ध्यानं समर्पयामि।।

# आवाहनम्

ॐ शिखिने नमः। शिखिनम् आवाहयामि, स्थापयामि।

ॐ पर्जन्याय नमः। पर्जन्यम् आवाहयामि, स्थापयामि।

ॐ जयन्ताय नमः। जयन्तम् आवाहयामि, स्थापयामि।

ॐ कुलिशायुधाय नमः। कुलिशायुधम् आवाहयामि, स्थापयामि।

ॐ सूर्याय नमः। सूर्यम् आवाहयामि, स्थापयामि।

ॐ सत्याय नमः। सत्यम् आवाहयामि, स्थापयामि।

ॐ भृशाय नमः। भृशम् आवाहयामि, स्थापयामि।

ॐ आकाशाय नमः। आकाशम् आवाहयामि, स्थापयामि।

ॐ वायवे नमः। वायुम् आवाहयामि, स्थापयामि।

ॐ पूष्णे नमः। पूष्णम् आवाहयामि, स्थापयामि।

ॐ वितथाय नमः। वितथम् आवाहयामि, स्थापयामि।

ॐ गृहक्षताय नमः। गृहक्षतम् आवाहयामि, स्थापयामि।

ॐ यमाय नमः। यमम् आवाहयामि, स्थापयामि।

ॐ गन्धर्वाय नमः। गन्धर्वम् आवाहयामि, स्थापयामि।

ॐ भृंगराजाय नमः। भृंगराजम् आवाहयामि, स्थापयामि।

ॐ मृगाय नमः। मृगम् आवाहयामि, स्थापयामि।

ॐ पितृभ्यो नमः। पितृन् आवाहयामि, स्थापयामि।

ॐ दौवारिकाय नमः। दौवारिकम् आवाहयामि, स्थापयामि।

ॐ सुग्रीवाय नमः। सुग्रीवम् आवाहयामि, स्थापयामि।

ॐ पुष्पदन्ताय नमः। पुष्पदन्तम् आवाहयामि, स्थापयामि।

ॐ वरुणाय नमः। वरुणम् आवाहयामि, स्थापयामि।

ॐ असुराय नमः। असुरम् आवाहयामि, स्थापयामि।

ॐ शोषाय नमः। शोषम् आवाहयामि, स्थापयामि।

ॐ पापाय नमः। पापम् आवाहयामि, स्थापयामि।

ॐ रोगाय नमः। रोगम् आवाहयामि, स्थापयामि।

ॐ अहये नमः। अहिम् आवाहयामि, स्थापयामि।

ॐ मुख्याय नमः। मुख्यम् आवाहयामि, स्थापयामि।

ॐ भल्लाटाय नमः। भल्लाटम् आवाहयामि, स्थापयामि।

ॐ सोमाय नमः। सोमम् आवाहयामि, स्थापयामि।

ॐ सर्पाय नमः। सर्पम् आवाहयामि, स्थापयामि।

ॐ अदित्यै नमः। अदितिम् आवाहयामि, स्थापयामि।

ॐ दित्यै नमः। दितिम् आवाहयामि, स्थापयामि।

ॐ आपाय नमः। आपम् आवाहयामि, स्थापयामि।

ॐ सावित्राय नमः। सावित्रम् आवाहयामि, स्थापयामि।

ॐ जयाय नमः। जयम् आवाहयामि, स्थापयामि।

ॐ रुद्राय नमः। रुद्रम् आवाहयामि, स्थापयामि।

ॐ अर्यमणे नमः। अर्यमणम् आवाहयामि, स्थापयामि।

ॐ सवित्रे नमः। सवितारम् आवाहयामि, स्थापयामि।

ॐ विवस्वते नमः। विवस्वतम् आवाहयामि, स्थापयामि।

ॐ विवुधाधिपाय नमः। विवुधाधिपम् आवाहयामि, स्थापयामि।

ॐ मित्राय नमः। मित्रम् आवाहयामि, स्थापयामि।

ॐ राजयक्ष्मणे नमः। राजयक्ष्माणम् आवाहयामि, स्थापयामि।

ॐ पृथिवीधराय नमः। पृथिवीधरम् आवाहयामि, स्थापयामि।

ॐ आपवत्साय नमः। आपवत्सम् आवाहयामि, स्थापयामि।

ॐ ब्रम्हणे नमः। ब्रम्हाणम् आवाहयामि, स्थापयामि।

ॐ चरक्यै नमः। चरकीम् आवाहयामि, स्थापयामि।

ॐ विदार्यै नमः। विदारीम् आवाहयामि, स्थापयामि।

ॐ पूतनायै नमः। पूतनाम् आवाहयामि, स्थापयामि।

ॐ पापराक्षस्यै नमः। पापराक्षसीम् आवाहयामि, स्थापयामि।

ॐ स्कन्दाय नमः। स्कन्दम् आवाहयामि, स्थापयामि।
ॐ अर्यमणे नमः। अर्यमणम् आवाहयामि, स्थापयामि।
ॐ जृम्भकाय नमः। जृम्भकम् आवाहयामि, स्थापयामि।
ॐ पिलिपिच्छाय नमः। पिलिपिच्छम् आवाहयामि, स्थापयामि।
ॐ इन्द्राय नमः। इन्द्रम् आवाहयामि, स्थापयामि।
ॐ अग्नये नमः। अग्निम् आवाहयामि, स्थापयामि।
ॐ यमाय नमः। यमम् आवाहयामि, स्थापयामि।
ॐ निर्ॠतये नमः। निर्ॠतिम् आवाहयामि, स्थापयामि।
ॐ वरुणाय नमः। वरुणम् आवाहयामि, स्थापयामि।
ॐ वायवे नमः। वायुम् आवाहयामि, स्थापयामि।
ॐ कुबेराय नमः। कुबेरम् आवाहयामि, स्थापयामि।
ॐ ईश्वराय नमः। ईश्वरम् आवाहयामि, स्थापयामि।
ॐ ब्रम्हणे नमः। ब्रम्हाणम् आवाहयामि, स्थापयामि।
ॐ अनन्ताय नमः। अनन्तम् आवाहयामि, स्थापयामि।
ॐ वास्तोष्पतये नमः। वास्तोष्पतिम् आवाहयामि, स्थापयामि।
ॐ भूर्भुवः स्वः शिखिनादि वास्तुमंडल देवता सहिताय वास्तुपुरुषाय नमः। आवाहयामि, स्थापयामि, पूजयामि।।

## कलश स्थापनम्

ॐ तत्वा यामि ब्रम्हणा वन्दमानस्त दाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश ग्वं स मा न आयुः प्रमोषीः।।

अस्मिन् वास्तु कलशे वरुणम् आवाहयामि, स्थापयामि।

## प्राण प्रतिष्ठाम्

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ग्वं समिमं दधातु। विश्वेदेवास इह मादयन्तामो 3 प्रतिष्ठ।।

श्री शिखिनादि वास्तुमंडल देवता सहिताय वास्तुपुरुषाः सुप्रतिष्ठिताः वरदा भवन्तु।।

## पूजनम्

पाद्यं, अर्घ्यं, आचमनीयं, सर्वांगे स्नानीयं जलं समर्पयामि, पंचामृत स्नानं, शुद्धोदक स्नानं समर्पयामि, यज्ञोपवीतं, वस्त्रं, उपवस्त्रं समर्पयामि, आचमनीयं जलं, सुगन्धि द्रव्यं समर्पयामि, चंदनं, कुंकुमं, हरिद्रां, सिंदूरं समर्पयामि, अक्षतान, पुष्पाणि, दुर्वाकुरान्, बिल्वपत्राणि समर्पयामि, धूपं, दीपं, नैवेद्यं निवेदयामि, मध्ये पानीयं, आचमनीयं जलं– प्राणाय स्वाहा, व्यानाय स्वाहा, अपानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा। उत्तरापोशनं, करोद्वर्तनार्थे चंदनं समर्पयामि, ॠतुफलं, सताम्बूल पूगीफलं, कृतायाः पूजायाः साद्‌गुण्यार्थे द्रव्य दक्षिणां समर्पयामि, नमस्करोमि।

## प्रार्थनाम्

ॐ वास्तोष्पतिम् विदिकार्यम्, भूशैयाभिरतम् प्रभुम्।नमाम्यहम् देवम्, सर्वकर्म फलप्रदम्।।
ॐ देवेश वास्तुपुरुषम्, सर्वविघ्न विदारणम्।शान्तिम् कुरु सुखम् देहि, यज्ञेस्मिन् मम सर्वदा।।
ॐ नागपृष्ठ समारूढ़ं, शूलहस्तं महाबलम्।पाताल नायकं देवं, वास्तुदेवं नमाम्यहम्।।
श्री वास्तुमण्डल देवताभ्यो नमः, प्रार्थना पूर्वकं नमस्करोमि।
ॐ अनया पूजया श्री शिखिनादि वास्तुमंडल देवता सहिताय वास्तुपुरुषाः प्रीयन्तां न मम।।
इति भूमौ जलं क्षिपेत्।।

**श्री शिखिनादि वास्तुमंडल देवता सहिताय वास्तुपुरुषाय पूजनकर्मणो यन्न्यूनादिरिक्तं वास्तुपुरुष प्रसादात्परिपूर्णमस्तु।।**

# श्री क्षेत्रपाल मंडल देवता पूजनम्

## ध्यानम्

ॐ नहि स्प्पश मविदन्न् अन्यमस्माद् वैश्वानरात् पुर एतारम् अग्नेः। एमेनम् अवृधन्न् अमृता अमर्त्यम् वैश्वानरम् क्षैत्रजित्थाय देवाः।।
ॐ भूर्भुवः स्वः श्री क्षेत्रपाल देवताभ्यो नमः। ध्यानम् समर्पयामि।।

## आवाहनम्

ॐ क्षेत्रपालाय नमः। क्षेत्रपालम् आवाहयामि, स्थापयामि।
ॐ अजराय नमः। अजरम् आवाहयामि, स्थापयामि।

ॐ व्यापकाय नमः। व्यापकम् आवाहयामि, स्थापयामि।
ॐ इन्द्रचौराय नमः। इन्द्रचौरम् आवाहयामि, स्थापयामि।
ॐ इन्द्रमूर्तये नमः। इन्द्रमूर्तिम् आवाहयामि, स्थापयामि।
ॐ कूष्माण्डाय नमः। कूष्माण्डम् आवाहयामि, स्थापयामि।
ॐ वरुणाय नमः। वरुणम् आवाहयामि, स्थापयामि।
ॐ वटुकाय नमः। वटुकम् आवाहयामि, स्थापयामि।
ॐ विमुक्ताय नमः। विमुक्तम् आवाहयामि, स्थापयामि।
ॐ लिप्तकाय नमः। लिप्तकम् आवाहयामि, स्थापयामि।
ॐ लीलाकाय नमः। लीलाकम् आवाहयामि, स्थापयामि।
ॐ एकदंष्टाय नमः। एकदंष्टम् आवाहयामि, स्थापयामि।
ॐ ऐरावताय नमः। ऐरावतम् आवाहयामि, स्थापयामि।
ॐ ओषधिघ्नाय नमः। ओषधिघ्नम् आवाहयामि, स्थापयामि।
ॐ बन्धनाय नमः। बन्धनम् आवाहयामि, स्थापयामि।
ॐ दिव्यकाय नमः। दिव्यकम् आवाहयामि, स्थापयामि।
ॐ कम्बलाय नमः। कम्बलम् आवाहयामि, स्थापयामि।
ॐ भीषणाय नमः। भीषणम् आवाहयामि, स्थापयामि।
ॐ गवयाय नमः। गवयम् आवाहयामि, स्थापयामि।
ॐ घण्टाय नमः। घण्टाम् आवाहयामि, स्थापयामि।
ॐ व्यालाय नमः। व्यालम् आवाहयामि, स्थापयामि।
ॐ अणवे नमः। अणुम् आवाहयामि, स्थापयामि।
ॐ चन्द्रवारुणाय नमः। चन्द्रवारुणम् आवाहयामि, स्थापयामि।
ॐ पटाटोपाय नमः। पटाटोपम् आवाहयामि, स्थापयामि।
ॐ जटिलाय नमः। जटिलम् आवाहयामि, स्थापयामि।
ॐ क्रतवे नमः। क्रतुम् आवाहयामि, स्थापयामि।
ॐ घण्टेश्वराय नमः। घण्टेश्वरम् आवाहयामि, स्थापयामि।
ॐ विटंकाय नमः। विटंकम् आवाहयामि, स्थापयामि।

ॐ मणिमानाय नमः। मणिमानम् आवाहयामि, स्थापयामि।

ॐ गणबन्धवे नमः। गणबन्धुम् आवाहयामि, स्थापयामि।

ॐ डामराय नमः। डामरम् आवाहयामि, स्थापयामि।

ॐ ढुण्डिकर्णाय नमः। ढुण्डिकरणम् आवाहयामि, स्थापयामि।

ॐ स्थविराय नमः। स्थविरम् आवाहयामि, स्थापयामि।

ॐ दन्तुराय नमः। दन्तुरम् आवाहयामि, स्थापयामि।

ॐ नागकर्णाय नमः। नागकर्णम् आवाहयामि, स्थापयामि।

ॐ धनदाय नमः। धनदम् आवाहयामि, स्थापयामि।

ॐ महाबलाय नमः। महाबलम् आवाहयामि, स्थापयामि।

ॐ फेत्काराय नमः। फेत्कारम् आवाहयामि, स्थापयामि।

ॐ चीत्काराय नमः। चीत्कारम् आवाहयामि, स्थापयामि।

ॐ सिंहाय नमः। सिंहम् आवाहयामि, स्थापयामि।

ॐ मृगाय नमः। मृगम् आवाहयामि, स्थापयामि।

ॐ यक्षाय नमः। यक्षम् आवाहयामि, स्थापयामि।

ॐ मेघवाहनाय नमः। मेघवाहनम् आवाहयामि, स्थापयामि।

ॐ तीक्ष्णोष्ठाय नमः। तीक्ष्णोष्ठम् आवाहयामि, स्थापयामि।

ॐ अनलाय नमः। अनलम् आवाहयामि, स्थापयामि।

ॐ शुक्लतुण्डाय नमः। शुक्लतुण्डम् आवाहयामि, स्थापयामि।

ॐ सुधालापाय नमः। सुधालापम् आवाहयामि, स्थापयामि।

ॐ बर्बरकाय नमः। बर्बरकम् आवाहयामि, स्थापयामि।

ॐ सवनाय नमः। सवनम् आवाहयामि, स्थापयामि।

ॐ पावनाय नमः। पावनम् आवाहयामि, स्थापयामि।

ॐ भूर्भुवः स्वः श्री क्षेत्रपालेभ्यो नमः। आवाहयामि, स्थापयामि, पूजयामि।।

## कलश स्थापनम्

ॐ तत्वा यामि ब्रम्हणा वन्दमानस्त दाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश ग्वं स मा न आयुः प्रमोषीः।।

**अस्मिन् क्षेत्रपाल कलशे वरुणम् आवाहयामि, स्थापयामि।**

## प्राण प्रतिष्ठाम्

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ग्वं समिमं दधातु। विश्वेदेवास इह मादयन्तामो 3 प्रतिष्ठ।। श्री क्षेत्रपाल देवताः सुप्रतिष्ठिताः वरदा भवन्तु।।

## पूजनम्

पाद्यं, अर्घ्यं, आचमनीयं, सर्वांगे स्नानीयं जलं समर्पयामि, पंचामृत स्नानं, शुद्धोदक स्नानं समर्पयामि, यज्ञोपवीतं, वस्त्रं, उपवस्त्रं समर्पयामि, आचमनीयं जलं, सुगन्धि द्रव्यं समर्पयामि, चंदनं, कुंकुमं, हरिद्रां, सिंदूरं समर्पयामि, अक्षतान, पुष्पाणि, दुर्वांकुरान्, बिल्वपत्राणि समर्पयामि, धूपं, दीपं, नैवेद्यं निवेदयामि, मध्ये पानीयं, आचमनीयं जलं– ॐ प्राणाय स्वाहा, व्यानाय स्वाहा, अपानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा। उत्तरापोशनं, करोद्वर्तनार्थे चंदनं समर्पयामि, ऋतुफलं, सताम्बूल पूगीफलं, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्य दक्षिणां समर्पयामि, नमस्करोमि।

## प्रार्थनाम्

ॐ नमामि क्षेत्रपाल त्वाम्, अजरादि गणैः सह। पूजाम् गृहाण मे देव, निर्विघ्नम् कुरु सर्वदा।।

ॐ यं यं यं यक्षरूपम्, दशदिशि वदनम्, भूमि कम्पायमानम्।
सं सं सं संहारमूर्तिम्, सिरमुकुट जटाशेखरम्, चन्द्रबिम्बम्।।
दं दं दं दीप्तकायम्, विकृतनख मुख चोर्ध्व रेखा कपालम्।
पं पं पं पाप नाशम्, प्रणत पशुपतिम्, क्षेत्रपालम् नमामि।।

श्री क्षेत्रपाल देवताभ्यो नमः, प्रार्थना पूर्वकं नमस्करोमि।

ॐ अनया पूजया श्री अजरादि मंडल देवता सहित क्षेत्रपालः प्रीयन्तां न मम।। इति भूमौ जलं क्षिपेत्।।

**श्री अजरादि मंडल देवता सहित क्षेत्रपालाय पूजनकर्मणो यन्न्यूनादिरिक्तं क्षेत्रपाल प्रसादात्परिपूर्णमस्तु।।**

# यज्ञ मण्डपाधिष्ठातृ देवता पूजनम्

### १. मध्य हवन कुण्डे ईशान स्तम्भे रक्त वर्णम् ब्रम्हाणम् पूजयेत्।

ॐ हंस पृष्ठ समारूढ़ः, देवतागण सेवितः। आगच्छ भगवन् ब्रम्हन्, प्रथम स्तम्भ संस्थितः।।

ॐ भूर्भुवः स्वः ब्रम्हणे नमः, ब्रम्हाणम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ सावित्र्यै नमः, ॐ वास्तुदेवतायै नमः, ॐ ब्राह्मयै नमः,

ॐ गंगायै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः।

**ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन होमकुंड ईशानकोण स्थित स्तम्भाधिष्ठातृदेवता प्रीयंताम् न मम।

**२. मध्य हवन कुण्डे आग्नेय स्तम्भे कृष्ण वर्णम् विष्णुम् पूजयेत्।**

ॐ गरुड़ञ्च समारूढ़म्, लक्ष्मी गण समायुतम्। आगच्छ भगवन् विष्णो, द्वितीय स्तम्भ संस्थितः।। ॐ भूर्भुवः स्वः विष्णवे नमः, विष्णुम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ लक्ष्म्यै नमः, ॐ आदित्यायै नमः, ॐ वैष्णव्यै नमः, ॐ वसुदायै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः।

**ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन होमकुंड अग्निकोण स्थित स्तम्भाधिष्ठातृदेवता प्रीयंताम् न मम।

**३. मध्य हवन कुण्डे नैऋत्यस्तम्भे श्वेत वर्णम् शंकरम् पूजयेत्।**

ॐ गंगाधर महादेव, पार्वती प्राण बल्लभः। आगच्छ भगवन्नीश, तृतीय स्तम्भ संस्थितः।। ॐ भूर्भुवः स्वः शिवाय नमः, शिवम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ गौर्यै नमः, माहेश्वर्यै नमः, शोभनायै नमः, भद्रायै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन होमकुंड नैऋत्यकोण स्थित स्तम्भाधिष्ठातृदेवता प्रीयंताम् न मम।

**४. मध्य हवन कुण्डे वायव्यस्तम्भे पीत वर्णम् इन्द्रम् पूजयेत्।**

ॐ देवराज महाबाहो, सर्वाभरण भूषितः। आगच्छ भगवन् इन्द्र, चतुर्थ स्तम्भ संस्थितः।। ॐ भूर्भुवः स्वः इन्द्राय नमः, इन्द्रम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ इन्द्राण्यै नमः, ॐ आनन्दायै नमः, ॐ विभूत्यै नमः, ॐ आदित्यायै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन होमकुंड वायव्यकोण स्थित स्तम्भाधिष्ठातृदेवता प्रीयंतां न मम।

**५. बाह्य ईशान कोणे रक्त वर्ण स्तम्भे सूर्यम् पूजयेत्।**

ॐ सप्तहस्त महाबाहो, सप्त श्वेताश्व वाहनः। आगच्छ भगवन् भानो, पंचम स्तम्भ संस्थितः।। ॐ भूर्भुवः स्वः सूर्याय नमः, सूर्यम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ सौर्यै नमः, ॐ भूत्यै नमः, ॐ सावित्र्यै नमः, ॐ मंगलायै नमः।

**स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। ततः शाखाबंधनानि पूजयेत्। अनेन कृतेन बाह्य ईशान कोण स्थित स्तम्भाधिष्ठातृदेवता प्रीयंताम् न मम।

**६. बाह्य ईशान पूर्वयोः मध्ये श्वेत वर्ण स्तम्भे गणेशम् पूजयेत्।**

ॐ लम्बोदर महाकाय, गजवक्त्र चतुर्भुजः। आगच्छ गणनाथस्त्वं, षष्ठ स्तम्भ समाश्रितः।। ॐ भूर्भुवः स्वः गणेशाय नमः, गणेशम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ सरस्वत्यै नमः, ॐ विघ्नहरायै नमः, ॐ जयायै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन बाह्य ईशान इन्द्र मध्ये स्तम्भाधिष्ठातृदेवता प्रीयंताम् न मम।

**७. बाह्य अग्नि पूर्वयोः मध्ये कृष्ण वर्ण स्तम्भे यमम् पूजयेत्।**

ॐ चित्रगुप्तादि संयुक्त, दण्ड मुद्गर धारकः। आगच्छ भगवन् धर्मम्, सप्तम स्तम्भ संस्थितः।। ॐ भूर्भुवः स्वः यमाय नमः, यमम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ संध्यायै नमः, ॐ आश्वत्यै नमः, ॐ कूरायै नमः, ॐ नियन्त्रयै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन बाह्य पूर्व अग्नि मध्ये स्तम्भाधिष्ठातृदेवता प्रीयंताम् न मम।

**८. बाह्य अग्नि कोणे कृष्ण वर्ण स्तम्भे नागराजम् पूजयेत्।**

ॐ अशीबिष समोपेतम्, नागकन्या विराजितः। आगच्छ नाग राजेन्द्र, अष्टम स्तम्भ संस्थितः।। ॐ भूर्भुवः स्वः नागराजाय नमः, नागराजम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ नमो खेटक हस्तेभ्यो त्रिभोगेभ्यो नमः, ॐ नमो भीषण देवेभ्यः खंगधृभ्यो नमः, ॐ मध्य संध्यायै नमः, ॐ धरायै नमः, ॐ पद्मायै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन बाह्य आग्नेय कोण स्थित स्तम्भाधिष्ठातृदेवता प्रीयंताम् न मम।

**९. बाह्य अग्नि दक्षिणयोः मध्ये श्वेत वर्ण स्तम्भे स्कन्दम् पूजयेत्।**

ॐ आवाहयामि देवेशम्, षण्मुख कृत्तिका सुतम्। रुद्र तेजः समुत्पन्नम्, देव सेना समन्वितम्।। मयूर वाहनम् शक्तिं, पाणिम् वै ब्रम्हचारिणम्। आगच्छ भगवन् स्कंद, नवम स्तम्भ संस्थितः।। ॐ भूर्भुवः स्वः स्कन्दाय नमः, स्कन्दम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ नमः स्कन्दाय शैवाय, घण्टा कुक्कुट धारिणे।

पताका शक्ति हस्ताय, षण्मुखाय च ते नमः।। ॐ पश्चिम संध्यायै नमः,
**स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।**
अनेन कृतेन अग्नि दक्षिणयोर्मध्ये स्थित स्तम्भाधिष्ठातृदेवता प्रीयंताम् न मम।

**१०. बाह्य दक्षिण नैर्ऋत्ययोः मध्ये धूम्र वर्ण स्तम्भे वायुम् पूजयेत्।**

ॐ आवाहयामि देवेश, भूतानाम् देह धारिणम्। स्र्वाधारम् महावेगम्, मृग वाहनमीश्वरम्।। ध्वज हस्तम् गन्धवहम्, त्रैलोक्यान्तर चारिणम्। आगच्छ भगवन् वायो, दशम स्तम्भ संस्थितः।। ॐ भूर्भुवः स्वः वायवे नमः, वयुम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ वायव्यै नमः, ॐ गायत्र्यै नमः, ॐ मध्यम सन्ध्यायै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।**
अनेन कृतेन दक्षिण नैर्ऋत्ययोः मध्ये स्तम्भाधिष्ठातृ देवता प्रीयंताम् न मम।

**११. बाह्य नैर्ऋत्ये पीत वर्ण स्तम्भे सोमम् पूजयेत्।**

ॐ आवाहयामि देवेशम्, शशांकम् रजनी पतिम्। क्षझीरोदधि समुद्भूतम्, हरमौलि विभूषणम्।। सुधाकरम् द्विजाधीशम्, त्रैलोक्य प्रीति कारकम्। आगच्छ भगवन् सोम, एकादश स्तम्भ संस्थितः।। ॐ भूर्भुवः स्वः सोमाय नमः, सोमम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ सावित्र्यै नमः, ॐ अमृतकलशायै नमः, ॐ पश्चिम सन्ध्यायै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन नैर्ऋत्य स्तम्भाधिष्ठातृ देवता प्रीयंताम् न मम।

**१२. बाह्य नैर्ऋत्य पश्चिमयोः मध्ये श्वेत वर्ण स्तम्भे वरुणम् पूजयेत्।**

ॐ कुम्भीरथ समारूढ़म्, मणिरत्नम् समन्वितम्। आगच्छ देव वरुणम्, द्वादश स्तम्भ संस्थितः।। ॐ भूर्भुवः स्वः वरुणाय नमः, वरुणम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ वारुण्यै नमः, ॐ पाशधारिण्यै नमः, ॐ वृहत्यै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।**
अनेन कृतेन नैर्ऋत्य वरुणयोः मध्ये स्तम्भाधिष्ठातृ देवता प्रीयंताम् न मम।

**१३. बाह्य पश्चिम वायव्य मध्ये श्वेत वर्ण स्तम्भे अष्टवसून् पूजयेत्।**

ॐ अश्वारूढान् दिव्य वस्त्रान्, सर्वालंकार भूषितान्।
वसवोऽष्टावा गच्छन्तु, त्रयोदश समाश्रिताः।।

ॐ भूर्भुवः स्वः अष्ट वसुभ्यो नमः, अष्टवसून् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ विनतायै नमः, ॐ अणिमायै नमः, ॐ भूत्यै नमः। ॐ गरिमायै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन वरुण वायु मध्यस्थ स्तम्भाधिष्ठातृ देवता प्रीयंताम् न मम।

**१४. बाह्य वायव्ये पीत वर्ण स्तम्भे धनदम् पूजयेत्।**

ॐ दिव्य मालाम्बरधरम्, गदाहस्तम् महाभुजम्। आगच्छ यक्षराज त्वम्, शक्र स्तम्भे समाश्रितः।। ॐ भूर्भुवः स्वः धनदाय नमः, धनदम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ आदित्यायै नमः, ॐ लघिमायै नमः, ॐ सिनीवाल्यै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन वायव्य स्तम्भाधिष्ठातृ देवता प्रीयंताम् न मम।

**१५. बाह्य उत्तर वायव्ययोः मध्ये पीत वर्ण स्तम्भे वृहस्पतिम् पूजयेत्।**

ॐ आवाहयामि देवेशम्, गुरुम् त्रिदश पूजितम्। हेम गोरोचना वर्णम्, पीत स्कन्धम् सुवक्षसम्।। शंखम् च कलशम् चैव, पाणिभ्याम् हेम विभ्रमम्। वृहस्पते समागच्छ, स्तम्भेऽस्मिन् सन्निधो भव।। ॐ भूर्भुवः स्वः वृहस्पतये नमः, व्हस्पतिम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि। ॐ पूर्णमास्यै नमः,

ॐ सावित्र्यै नमः। **स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन वायव्य उत्तर मध्य स्तम्भाधिष्ठातृ देवता प्रीयंताम् न मम।

**१६. बाह्य उत्तर ईशानयोः मध्ये रक्तवर्ण स्तम्भे विश्वकर्माणम् पूजयेत्।**

ॐ आवाहयामि देवेशम्, विश्वकर्माणमीश्वरम्। मूर्तामूर्तकरम् देवम्, सर्व कर्तारमीश्वरम्।। त्रैलोक्य सूत्र कर्तारम्, द्विभुजम् विश्व दर्शितम्। आगच्छ विश्वकर्मत्वं, स्तम्भेऽस्मिन् सन्निधो भव।। ॐ भूर्भुवः स्वः विश्वकर्मणे नमः, विश्वकर्माणम् आवाहयामि। सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

ॐ सिनीवाल्यै नमः, ॐ सावित्र्यै नमः, ॐ वास्तुदेवतायै नमः।

**स्तम्भम् आलभेत्,** स्तम्भ शिरसि– ॐ नागमात्रे नमः। **ततः शाखाबंधनानि पूजयेत्।** अनेन कृतेन उत्तर ईशानयोः मध्य स्तम्भाधिष्ठातृ देवता प्रीयंताम् न मम।

# सतोरण द्वारपाल पूजनम्

## ।। पूर्वे ऋग्वेद पूजनम्।।

ॐ अग्निमीले पुरोहितम् यज्ञस्य देवमृत्विजम् होतारम् रत्न धातमम् ।।
ॐ भूर्भुवः स्वः ऋग्वेदाय नमः, सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि, नमस्करोमि।

## ।। दक्षिणे यजुर्वेद पूजनम्।।

ॐ इषे त्वोर्जे त्वा वायवस्त्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्या
यध्व मगन्ध्या इन्द्राय भागम् प्रजावती रनमीवा अयक्ष्मा मा वस्तेन ईशत माघ
श ग्वं सो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्जजमानस्य पशून्न् पाहि ।।
ॐ भूर्भुवः स्वः यजुर्वेदाय नमः, सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि, नमस्करोमि।

## ।। पश्चिमे सामवेद पूजनम्।।

ॐ अग्न आयाहि वीतये गृणानो हव्य दातये। निहोता सत्सि बर्हिषि ।।
ॐ भूर्भुवःस्वः सामवेदाय नमः, सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि, नमस्करोमि।

## ।। उत्तरे अथर्ववेद पूजनम्।।

ॐ शं नो देवी रभिष्टय आपो भवन्तु पीतये। **शं ज्जोरभि स्त्रवन्तु नः।।**
ॐ भूर्भुवः स्वः अथर्ववेदाय नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

# दिग्पाल पूजनम्

**पूर्वे-** ॐ भूर्भुवः स्वः ऋग्वेद सहित इन्द्राय नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

**आग्नेयाम्-** ॐ भूर्भुवः स्वः अग्नये नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

**दक्षिणे-** ॐ भूर्भुवः स्वः यजुर्वेद सहित यमाय नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

**नैर्ऋत्याम्-** ॐ भूर्भुवः स्वः नैर्ऋते नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

**पश्चिमे-** ॐ भूर्भुवः स्वः सामवेद सहित वरुणाय नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

**वायव्याम्-** ॐ भूर्भुवः स्वः वायवे नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

**उत्तरे-** ॐ भूर्भुवः स्वः अथर्ववेद सहित सोमाय नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

**ईशान्याम्-** ॐ भूर्भुवः स्वः ईश्वराय नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

**पूर्व-ईशानयोर्मध्ये-** ॐ भूर्भुवः स्वः ब्रम्हणे नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

**नैर्ऋत्य-पश्चिमयोर्मध्ये-** ॐ भूर्भुवः स्वः अनंताय नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

## ध्वजा पूजनम्

ॐ एह्येहि भगवन् देव, देववाहन वै खग। श्रीकरः श्रीनिवासश्च जय जैत्रोपशोभित।।
व्योमरूप महारूप, धर्मात्मंस्त्वं च वै गतेः।सांनिध्यं कुरु दण्डेऽस्मिन्, साक्षी च ध्रुवतां व्रज।।
विष्णु पत्राय शान्ताय, बल बुद्धि युताय च।पक्षीन्द्राय अतिवेगाय, गरुणाय नमो नमः।।
ॐ भूर्भुवः स्वः गरुणध्वजाय नमः, सर्वोपचारार्थे गंधाक्षत पुष्पाणि समर्पयामि, नमस्करोमि।

## श्री सर्वतोभद्र मंडल देवता पूजनम्

### ध्यानम्

ॐ ब्रम्ह यज्ञानम् प्रथमम् पुरस्ताद् विसीमतः सुरुचोव्वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः।।

ॐ भूर्भुवः स्वः ब्रम्हादि सर्वतोभद्र मंडल देवताभ्यो नमः। ध्यानम् समर्पयामि।।

### आवाहनम्

ॐ ब्रम्हणे नमः। ब्रम्हाणम् आवाहयामि, स्थापयामि।
ॐ सोमाय नमः। सोमम् आवाहयामि, स्थापयामि।
ॐ ईशानाय नमः। ईशानम् आवाहयामि, स्थापयामि।

ॐ इन्द्राय नमः। इन्द्रम् आवाहयामि, स्थापयामि।

ॐ अग्नये नमः। अग्निम् आवाहयामि, स्थापयामि।

ॐ यमाय नमः। यमम् आवाहयामि, स्थापयामि।

ॐ निर्ऋृतये नमः। निर्ऋृतिम् आवाहयामि, स्थापयामि।

ॐ वरुणाय नमः। वरुणम् आवाहयामि, स्थापयामि।

ॐ वायवे नमः। वायुम् आवाहयामि, स्थापयामि।

ॐ अष्ट वसुभ्यो नमः। अष्टवसून् आवाहयामि, स्थापयामि।

ॐ एकादश रुद्रेभ्यो नमः। एकादशरुद्रान् आवाहयामि, स्थापयामि।

ॐ द्वादश आदित्तेभ्यो नमः। द्वादश आदित्यान् आवाहयामि, स्थापयामि।

ॐ अश्विभ्याम् नमः। अश्विनौ आवाहयामि, स्थापयामि।

ॐ विश्वेभ्यो देवेभ्यो नमः। विश्वान् देवान् आवाहयामि, स्थापयामि।

ॐ पितृभ्यो नमः। पितृन् आवाहयामि, स्थापयामि।

ॐ सप्त यक्षेभ्यो नमः। सप्त यक्षान् आवाहयामि, स्थापयामि।

ॐ भूतेभ्यो नमः। भूतान् आवाहयामि, स्थापयामि।

ॐ सर्पेभ्यो नमः। सर्पान् आवाहयामि, स्थापयामि।

ॐ गन्धर्वभ्यो नमः। गन्धर्वान् आवाहयामि, स्थापयामि।

ॐ अप्सरोभ्यो नमः। अप्सरान् आवाहयामि, स्थापयामि।

ॐ स्कन्दाय नमः। स्कन्दम् आवाहयामि, स्थापयामि।

ॐ नन्दीश्वराय नमः। नन्दीश्वरम् आवाहयामि, स्थापयामि।

ॐ शूलाय नमः। शूलम् आवाहयामि, स्थापयामि।

ॐ महाकालाय नमः। महाकालम् आवाहयामि, स्थापयामि।

ॐ प्रजापतिभ्यो नमः। प्रजापतिम् आवाहयामि, स्थापयामि।

ॐ दुर्गायै नमः। दुर्गाम् आवाहयामि, स्थापयामि।

ॐ विष्णवे नमः। विष्णुम् आवाहयामि, स्थापयामि।

ॐ स्वधा सहित पितृभ्यो नमः।स्वधासहित पितरान् आवाहयामि, स्थापयामि।

ॐ मृत्युरोगेभ्यो नमः। मृत्यु रोगान् आवाहयामि, स्थापयामि।

ॐ गणपतये नमः। गणपतिम् आवाहयामि, स्थापयामि।

ॐ अद्भ्यो नमः। अपः आवाहयामि, स्थापयामि।
ॐ मरुद्भ्यो नमः। मरुतम् आवाहयामि, स्थापयामि।
ॐ पृथिव्यै नमः। पृथिवीम् आवाहयामि, स्थापयामि।
ॐ गंगादि सप्तसरिद्भ्यो नमः।गंगादिसप्तसरितान् आवाहयामि, स्थापयामि।
ॐ सप्त सागरेभ्यो नमः। सप्तसागरान् आवाहयामि, स्थापयामि।
ॐ मेरवे नमः। मेरुम् आवाहयामि, स्थापयामि।
ॐ गदायै नमः। गदाम् आवाहयामि, स्थापयामि।
ॐ त्रिशूलाय नमः। त्रिशूलम् आवाहयामि, स्थापयामि।
ॐ वज्राय नमः। वज्रम् आवाहयामि, स्थापयामि।
ॐ शक्तये नमः। शक्तिम् आवाहयामि, स्थापयामि।
ॐ दण्डाय नमः। दण्डम् आवाहयामि, स्थापयामि।
ॐ खड्गाय नमः। खड्गम् आवाहयामि, स्थापयामि।
ॐ पाशाय नमः। पाशम् आवाहयामि, स्थापयामि।
ॐ अंकुशाय नमः। अंकुशम् आवाहयामि, स्थापयामि।
ॐ गौतमाय नमः। गौतमम् आवाहयामि, स्थापयामि।
ॐ भरद्वाजाय नमः। भरद्वाजम् आवाहयामि, स्थापयामि।
ॐ विश्वामित्राय नमः। विश्वामित्रम् आवाहयामि, स्थापयामि।
ॐ कश्यपाय नमः। कश्यपम् आवाहयामि, स्थापयामि।
ॐ जमदग्नये नमः। जमदग्निम् आवाहयामि, स्थापयामि।
ॐ वशिष्ठाय नमः। वशिष्ठम् आवाहयामि, स्थापयामि।
ॐ अत्रये नमः। अत्रिम् आवाहयामि, स्थापयामि।
ॐ अरुन्धत्यै नमः। अरुन्धतीम् आवाहयामि, स्थापयामि।
ॐ ऐन्द्रयै नमः। ऐन्द्रीम् आवाहयामि, स्थापयामि।
ॐ कौमार्यै नमः। कौमारीम् आवाहयामि, स्थापयामि।
ॐ ब्राम्ह्यै नमः। ब्राम्हीम् आवाहयामि, स्थापयामि।
ॐ बाराह्यै नमः। बाराहीम् आवाहयामि, स्थापयामि।
ॐ चामुण्डायै नमः। चामुण्डाम् आवाहयामि, स्थापयामि।
ॐ वैष्णव्यै नमः। वैष्णवीम् आवाहयामि, स्थापयामि।

ॐ माहेश्वर्यै नमः। माहेश्वरीम् आवाहयामि, स्थापयामि।
ॐ वैनायक्यै नमः। वैनायकीम् आवाहयामि, स्थापयामि।
ॐ भूर्भुवः स्वः ब्रम्हादि सर्वतोभद्र मंडल देवताभ्यो नमः। आवाहयामि, स्थापयामि, पूजयामि।।

## कलश स्थापनम्

ॐ तत्वा यामि ब्रम्हणा वन्दमानस्त दाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश ग्वं स मा न आयुः प्रमोषीः।।
अस्मिन् सर्वतोभद्रमंडले प्रधान कलशे वरुणम् आवाहयामि, स्थापयामि।

## प्राण प्रतिष्ठाम्

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ग्वं समिमं दधातु। विश्वेदेवास इह मादयन्तामो 3 प्रतिष्ठ।। श्री सर्वतोभद्र मंडल देवताः सुप्रतिष्ठिताः वरदाः भवन्तु।।

## पूजनम्

पाद्यं, अर्घ्यं, आचमनीयं, सर्वांगे स्नानीयं जलं समर्पयामि, पंचामृत स्नानं, शुद्धोदक स्नानं समर्पयामि, यज्ञोपवीतं, वस्त्रं, उपवस्त्रं समर्पयामि, आचमनीयं जलं, सुगन्धि द्रव्यं समर्पयामि, चंदनं, कुंकुमं, हरिद्रां, सिंदूरं समर्पयामि, अक्षतान, पुष्पाणि, दुर्वाकुरान्, बिल्वपत्राणि समर्पयामि, धूपं, दीपं, नैवेद्यं निवेदयामि, मध्ये पानीयं, आचमनीयं जलं– ॐ प्राणाय स्वाहा, व्यानाय स्वाहा,अपानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा। उत्तरापोशनं, करोद्वर्तनार्थे चंदनं समर्पयामि, ऋतुफलं, सताम्बूल पूगीफलं, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्य दक्षिणां समर्पयामि, नमस्करोमि।

## प्रार्थनाम्

ॐ ब्रम्हाद्यावाहिता देवाः, सर्वतोभद्र मंडले। पूजां गृह्णीत मद् दत्तां, सर्वदा मे प्रसीदत।।
श्री सर्वतोभद्र देवताभ्यो नमः, प्रार्थना पूर्वकं नमस्करोमि।
ॐ अनया पूजया श्री ब्रम्हादि सर्वतोभद्र मंडल देवताः प्रीयन्तां न मम।।
इति भूमौ जलं क्षिपेत्।।

**श्री ब्रम्हादिसर्वतोभद्र मंडलदेवता पूजनकर्मणो यन्न्यूनादिरिक्तं सर्वतोभद्र प्रसादात्परिपूर्णमस्तु।।**

# श्री चतुर्लिंगतोभद्र मंडल देवता पूजनम्

## ध्यानम्

ॐ नमः शम्भवाय च मयोभवाय च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ।। श्री चतुर्लिंगतोभद्र मंडलस्थ देवताभ्यो नमः। ध्यानम् समर्पयामि ।।

## आवाहनम्

ॐ असितांग भैरवाय नमः। असितांग भैरवम् आवाहयामि, स्थापयामि।
ॐ रुरु भैरवाय नमः। रुरु भैरवम् आवाहयामि, स्थापयामि।
ॐ चण्ड भैरवाय नमः। चण्ड भैरवम् आवाहयामि, स्थापयामि।
ॐ क्रोध भैरवाय नमः। क्रोध भैरवम् आवाहयामि, स्थापयामि।
ॐ उन्मत्त भैरवाय नमः। उन्मत्त भैरवम् आवाहयामि, स्थापयामि।
ॐ कपाल भैरवाय नमः। कपाल भैरवम् आवाहयामि, स्थापयामि।
ॐ भीषण भैरवाय नमः। भीषण भैरवम् आवाहयामि, स्थापयामि।
ॐ संहार भैरवाय नमः। संहार भैरवम् आवाहयामि, स्थापयामि।
ॐ अनन्ताय नमः। अनन्तम् आवाहयामि, स्थापयामि।
ॐ वासुकये नमः। वासुकीम् आवाहयामि, स्थापयामि।
ॐ तक्षकाय नमः। तक्षकम् आवाहयामि, स्थापयामि।
ॐ कुलिशायुधाय नमः। कुलिशायुधम् आवाहयामि, स्थापयामि।
ॐ कर्कोटिकाय नमः। कर्कोटिकम् आवाहयामि, स्थापयामि।
ॐ शंखपालाय नमः। शंखपालम् आवाहयामि, स्थापयामि।
ॐ कम्बलाय नमः। कम्बलम् आवाहयामि, स्थापयामि।
ॐ अश्वताय नमः। अश्वतम् आवाहयामि, स्थापयामि।
ॐ शूलाय नमः। शूलम् आवाहयामि, स्थापयामि।
ॐ चन्द्रमौलिने नमः। चन्द्रमौलिम् आवाहयामि, स्थापयामि।
ॐ चन्द्रमसे नमः। चन्द्रमसम् आवाहयामि, स्थापयामि।
ॐ वृषभध्वजाय नमः। वृषभध्वजम् आवाहयामि, स्थापयामि।
ॐ त्रिलोचनाय नमः। त्रिलोचनम् आवाहयामि, स्थापयामि।
ॐ शक्तिधराय नमः। शक्तिधरम् आवाहयामि, स्थापयामि।
ॐ महेश्वराय नमः। महेश्वरम् आवाहयामि, स्थापयामि।

ॐ शूलपाणये नमः। शूलपाणिम् आवाहयामि, स्थापयामि।

**ततः सर्वतोभद्रवत् देवता स्थापनम्। तदन्तरम्-**

ॐ सद्योजाताय नमः। सद्योजातम् आवाहयामि, स्थापयामि।
ॐ वामदेवाय नमः। वामदेवम् आवाहयामि, स्थापयामि।
ॐ अघोराय नमः। अघोरम् आवाहयामि, स्थापयामि।
ॐ तत्पुरुषाय नमः। तत्पुरुषम् आवाहयामि, स्थापयामि।
ॐ ईशानाय नमः। ईशानम् आवाहयामि, स्थापयामि।
ॐ ऋग्वेदाय नमः। ऋग्वेदम् आवाहयामि, स्थापयामि।
ॐ यजुर्वेदाय नमः। यजुर्वेदम् आवाहयामि, स्थापयामि।
ॐ सामवेदाय नमः। सामवेदम् आवाहयामि, स्थापयामि।
ॐ अथर्ववेदाय नमः। अथर्ववेदम् आवाहयामि, स्थापयामि।
ॐ भवाय नमः। भवम् आवाहयामि, स्थापयामि।
ॐ शर्वाय नमः। शर्वम् आवाहयामि, स्थापयामि।
ॐ पशुपतये नमः। पशुपतिम् आवाहयामि, स्थापयामि।
ॐ ईशानाय नमः। ईशानम् आवाहयामि, स्थापयामि।
ॐ उग्राय नमः। उग्रम् आवाहयामि, स्थापयामि।
ॐ रुद्राय नमः। रुद्रम् आवाहयामि, स्थापयामि।
ॐ भीमाय नमः। भीमम् आवाहयामि, स्थापयामि।
ॐ महते नमः। महान्तम् आवाहयामि, स्थापयामि।
ॐ भवान्यै नमः। भवानीम् आवाहयामि, स्थापयामि।
ॐ शर्वाण्यै नमः। शर्वाणीम् आवाहयामि, स्थापयामि।पयामि।
ॐ पशुपत्यै नमः। पशुपतीम् आवाहयामि, स्थापयामि।
ॐ ईशान्यै नमः। ईशानीम् आवाहयामि, स्थापयामि।
ॐ उग्रायै नमः। उग्राम् आवाहयामि, स्थापयामि।
ॐ रुद्राण्यै नमः। रुद्राणीम् आवाहयामि, स्थापयामि।
ॐ भीमायै नमः। भीमाम् आवाहयामि, स्थापयामि।
ॐ महत्यै नमः। महतीम् आवाहयामि, स्थापयामि।
ॐ गदायै नमः। गदाम् आवाहयामि, स्थापयामि।

ॐ त्रिशूलाय नमः। त्रिशूलम् आवाहयामि, स्थापयामि।
ॐ भूर्भुवः स्वः चतुर्लिंगतोभद्र मंडलस्थ देवताभ्यो नमः।आवाहयामि, स्थापयामि, पूजयामि।।

## कलश स्थापनम्

ॐ तत्वा यामि ब्रम्हणा वन्दमानस्त दाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश ग्वं स मा न आयुः प्रमोषीः।।

अस्मिन् चतुर्लिंगतोभद्रमंडले प्रधान कलशे वरुणम् आवाहयामि, स्थापयामि।

## प्राण प्रतिष्ठाम्

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ग्वं समिमं दधातु।
विश्वेदेवास इह मादयन्तामो 3 प्रतिष्ठ।।

श्री चतुर्लिंगतोभद्र मंडलस्थ देवताः सुप्रतिष्ठिताः वरदाः भवन्तु।।

## पूजनम्

पाद्यं, अर्घ्यं, आचमनीयं, सर्वांगे स्नानीयं जलं समर्पयामि, पंचामृत स्नानं, शुद्धोदक स्नानं समर्पयामि, यज्ञोपवीतं, वस्त्रं, उपवस्त्रं समर्पयामि, आचमनीयं जलं, सुगन्धि द्रव्यं समर्पयामि, चंदनं, कुंकुमं, हरिद्रां, सिंदूरं समर्पयामि, अक्षतान, पुष्पाणि, दुर्वाकुरान्, बिल्वपत्राणि समर्पयामि, धूपं, दीपं, नैवेद्यं निवेदयामि, मध्ये पानीयं, आचमनीयं जलं
ॐ प्राणाय स्वाहा, व्यानाय स्वाहा,अपानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा। उत्तरापोशनं, करोद्वर्तनार्थे चंदनं समर्पयामि, ॠतुफलं, सताम्बूल पूगीफलं, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्य दक्षिणां समर्पयामि, नमस्करोमि।

## प्रार्थनाम्

ॐ मंदार माला कुलितालिकायै, कपाल मालांकित शेखराय।
दिव्याम्बरायै च दिगम्बराय, नमः शिवायै च नमः शिवाय।।
श्री चतुर्लिंगतोभद्र मंडल देवताभ्यो नमः, प्रार्थना पूर्वकं नमस्करोमि।
ॐ अनया पूजया श्री चतुर्लिंगतोभद्र मंडल देवताः प्रीयन्तां न मम।।इति भूमौ जलं क्षिपेत्।।
श्री चतुर्लिंगतोभद्र मंडल देवता पूजन कर्मणो यन्न्यूनादिरिक्तं चतुर्लिंगतोभद्र प्रसादात्परिपूर्णमस्तु।।

# ।। श्री गौरीतिलक मंडल आवाहनम् पूजनम्।।

**ध्यानम्**- ॐ अक्षस्त्रक्परशुं गदेषुकुलिशं पद्मं धनुष्कुण्डिकां,
दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम्।
शूलं पाशसुदर्शने च दधतीं हस्तैः प्रसन्नाननां,
सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम्।।

ॐ महाविष्णवे नमः, आवाहयामि स्थापयामि। ॐ महालक्ष्म्यै नमः। ॐ महेश्वराय नमः। ॐ महामायायै नमः। ॐ ऋग्वेदाय नमः। ॐ यजुर्वेदाय नमः। ॐ सामवेदाय नमः। ॐ अथर्ववेदाय नमः। ॐ अद्भ्यो नमः। ॐ जलोद्भवाय नमः। ॐ ब्रह्मणे नमः। ॐ प्रजापतये नमः। ॐ शिवाय नमः। ॐ अनन्ताय नमः। ॐ परमेष्ठिने नमः। ॐ धात्रे नमः। ॐ विधात्रे नमः। ॐ अर्यमणे नमः। ॐ मित्राय नमः। ॐ वरुणाय नमः। ॐ अंशुमते नमः। ॐ भगाय नमः। ॐ इन्द्राय नमः। ॐ विवस्वते नमः। ॐ पूष्णे नमः। ॐ पर्जन्याय नमः। ॐ त्वष्ट्रे नमः। ॐ दक्ष यज्ञाय नमः। ॐ देववसवे नमः। ॐ महासुताय नमः। ॐ सुधर्मणे नमः। ॐ शंखपदे नमः। ॐ महाबाहवे नमः। ॐ वपुष्मते नमः। ॐ अनन्ताय नमः। ॐ महेरणाय नमः। ॐ विश्वावसवे नमः। ॐ सुपर्वणे नमः। ॐ विष्टराय नमः। ॐ रुद्रदेवताय नमः। ॐ ध्रुवाय नमः। ॐ धराय नमः। ॐ सोमाय नमः। ॐ आपवत्साय नमः। ॐ नलाय नमः। ॐ अनिलाय नमः। ॐ प्रत्यूषाय नमः। ॐ प्रभासाय नमः। ॐ आवर्ताय नमः। ॐ सांवर्ताय नमः। ॐ द्रोणाय नमः। ॐ पुष्कराय नमः। ॐ ह्रींकार्य्यै नमः। ॐ ह्रियै नमः। ॐ कात्यायन्यै नमः। ॐ चामुण्डायै नमः। ॐ महादिव्यायै नमः। ॐ महाशब्दायै नमः। ॐ सिद्धिदायै नमः। ॐ ह्रीं कार्ये नमः। ॐ ऐं नमः। ॐ श्रीं श्रियै नमः। ॐ ह्रीं ह्रियै नमः। ॐ लक्ष्म्यै नमः। ॐ श्रियै नमः। ॐ सुधायै नमः। ॐ मेधायै नमः। ॐ प्रज्ञायै नमः। ॐ मत्यै नमः। ॐ स्वाहायै नमः। ॐ सरस्वत्यै नमः। ॐ गौर्यै नमः। ॐ पद्मायै नमः। ॐ शच्यै नमः। ॐ सुमेधायै नमः। ॐ सावित्र्यै नमः। ॐ विजयायै नमः। ॐ देवसेनायै नमः। ॐ स्वाहायै नमः। ॐ स्वधायै नमः। ॐ मात्रे नमः। ॐ गायत्र्यै नमः। ॐ लोकमात्रे नमः। ॐ धृत्यै नमः। ॐ पुष्टयै नमः। ॐ तुष्टयै नमः। ॐ आत्मदेवतायै नमः। ॐ गणेश्वर्यै नमः। ॐ कुलमात्रे नमः। ॐ शान्त्यै नमः। ॐ जयन्त्यै नमः। ॐ मंगलायै नमः। ॐ काल्यै नमः। ॐ भद्रकाल्यै नमः। ॐ कपालिन्यै नमः। ॐ दुर्गायै नमः। ॐ क्षमायै नमः। ॐ शिवायै नमः। ॐ धात्र्यै नमः। ॐ स्वाहास्वधाभ्यां नमः। ॐ दीप्यमानायै नमः। ॐ दीप्तायै नमः। ॐ सूक्ष्मायै नमः। ॐ विभूत्यै नमः। ॐ विमलायै नमः। ॐ परायै नमः।

ॐ अमोघायै नमः। ॐ विद्युतायै नमः। ॐ सर्वतोमुख्यै नमः। ॐ आनन्दायै नमः। ॐ नन्दिन्यै नमः। ॐ शक्त्यै नमः। ॐ महासूक्ष्मायै नमः। ॐ करालिन्यै नमः। ॐ भारत्यै नमः। ॐ ज्योतिष्मत्यै नमः। ॐ ब्राह्म्यै नमः। ॐ माहेश्वर्यै नमः। ॐ कौमार्यै नमः। ॐ वैष्णव्यै नमः। ॐ वाराह्यै नमः। ॐ इन्द्राण्यै नमः। ॐ चण्डिकायै नमः। ॐ बुद्ध्यै नमः। ॐ लज्जायै नमः। ॐ वपुष्मत्यै नमः। ॐ शान्त्यै नमः। ॐ कान्त्यै नमः। ॐ रत्यै नमः। ॐ प्रीत्यै नमः। ॐ कीर्त्यै नमः। ॐ प्रभायै नमः। ॐ काम्यायै नमः। ॐ कान्तायै नमः। ॐ सिद्ध्यै नमः। ॐ दयायै नमः। ॐ शिवदूत्यै नमः। ॐ श्रद्धायै नमः। ॐ क्षमायै नमः।
ॐ क्रियायै नमः। ॐ विद्यायै नमः। ॐ मोहिन्यै नमः। ॐ यशोवत्यै नमः। ॐ कृपावत्यै नमः। ॐ सलिलायै नमः। ॐ सुशीलायै नमः। ॐ ईश्वर्यै नमः। ॐ सिद्धेश्वर्यै नमः। ॐ द्वैपायनाय नमः। ॐ भारद्वाजाय नमः। ॐ गौतमाय नमः। ॐ सुमन्तवे नमः। ॐ देवलाय नमः। ॐ व्यासाय नमः। ॐ वसिष्ठाय नमः। ॐ च्यवनाय नमः। ॐ कण्वाय नमः। ॐ मैत्रेयाय नमः। ॐ कवये नमः। ॐ विश्वामित्राय नमः। ॐ वामदेवाय नमः। ॐ सुमन्ताय नमः। ॐ जैमिनये नमः। ॐ क्रतवे नमः। ॐ पिप्पलादाय नमः। ॐ पराशराय नमः। ॐ गर्गाय नमः। ॐ वैशम्पायनाय नमः। ॐ दक्षायनमः। ॐ मार्कण्डेयाय नमः। ॐ मृकण्डाय नमः। ॐ लोमशाय नमः। ॐ पुलहाय नमः। ॐ पुलस्त्याय नमः। ॐ बृहस्पतये नमः। ॐ जमदग्नये नमः। ॐ जामदग्न्याय नमः। ॐ दाल्भ्याय नमः। ॐ शिलोञ्छनाय नमः। ॐ गालवाय नमः। ॐ याज्ञवल्क्याय नमः। ॐ दुर्वाससे नमः। ॐ सौभरये नमः। ॐ जावालये नमः। ॐ वाल्मीकये नमः। ॐ बह्वृचाय नमः। ॐ इन्द्रप्रमितये नमः। ॐ देवमित्राय नमः। ॐ जाजलये नमः। ॐ शाकल्याय नमः। ॐ मुद्गलाय नमः। ॐ जातुकर्ण्याय नमः। ॐ बलाकाय नमः। ॐ कृपाचार्याय नमः। ॐ सुकर्मणे नमः। ॐ कौसल्याय नमः। ॐ ब्रह्माग्नये नमः। ॐ गार्हपत्याग्नये नमः। ॐ ईश्वराग्नये नमः। ॐ दक्षिणाग्नये नमः। ॐ वैष्णवाग्नये नमः। ॐ आहवनीयाग्नये नमः नमः। ॐ सप्त जिव्हाग्नये नमः। ॐ इध्मजिह्वाग्नये नमः। ॐ प्रवर्ग्याग्नये नमः। ॐ वडवाग्नये नमः। ॐ जाठराग्नये नमः। ॐ लौकिकाग्नये नमः। ॐ सूर्याय नमः। ॐ वेदांगाय नमः। ॐ भानवे नमः। ॐ इन्द्राय नमः। ॐ खगाय नमः। ॐ गभस्तिने नमः। ॐ यमाय नमः। ॐ अंशुमते नमः। ॐ हिरण्यरेतशे नमः। ॐ दिवाकराय नमः। ॐ मित्राय नमः। ॐ विष्णवे नमः। ॐ शम्भवे नमः। ॐ गिरिशाय नमः। ॐ अजैकपदे नमः। ॐ अर्हिर्बुधन्याय नमः। ॐ पिनाकपाणये नमः। ॐ अपराजिताय नमः। ॐ भुवनाधीश्वराय नमः। ॐ कपालिने नमः। ॐ विशाम्पतये नमः। ॐ रुद्राय नमः। ॐ वीरभद्राय नमः। ॐ अश्विनीकुमाराभ्यां नमः। ॐ अवहाय नमः। ॐ प्रवहाय नमः। ॐ उद्वहाय नमः।

ॐ सम्वहाय नमः। ॐ विवहाय नमः। ॐ परिवहाय नमः। ॐ परीवहाय नमः। ॐ धरायै नमः। ॐ अद्भ्यो नमः। ॐ अग्नये नमः। ॐ वायवे नमः। ॐ आकाशाय नमः। ॐ हिरण्यनाभाय नमः। ॐ पुष्पंजयाय नमः। ॐ द्रोणाय नमः। ॐ शृंगिणे नमः। ॐ वादरायणाय नमः। ॐ अगस्त्याय नमः। ॐ मनवे नमः। ॐ कश्यपाय नमः। ॐ धौम्याय नमः। ॐ भृगवे नमः। ॐ वीतिहोत्राय नमः। ॐ मधुछन्दसे नमः। ॐ वीरसेनाय नमः। ॐ कृतवृष्णये नमः। ॐ अत्रये नमः। ॐ मेधातिथये नमः। ॐ अरिष्टनेमये नमः। ॐ आङ्गिरसाय नमः। ॐ इन्द्रप्रमदाय नमः। ॐ इध्मवाहवे नमः। ॐ पिप्पलादाय नमः। ॐ नारदाय नमः। ॐ अरिष्टसेनाय नमः। ॐ अरुणाय नमः। ॐ सनकाय नमः। ॐ सनन्दनाय नमः। ॐ सनातनाय नमः। ॐ सनत्कुमाराय नमः। ॐ कपिलाय नमः। ॐ कर्दमाय नमः। ॐ मरीचये नमः। ॐ क्रतवे नमः। ॐ प्रचेतसे नमः। ॐ उत्तमाय नमः। ॐ दधीचये नमः। ॐ श्राद्धदेवताभ्यो नमः। ॐ गणदेवेभ्यो नमः। ॐ विद्याधरेभ्यो नमः। ॐ अप्सरोभ्यो नमः। ॐ यक्षेभ्यो नमः। ॐ रक्षोभ्यो नमः। ॐ गन्धर्वेभ्यो नमः। ॐ पिशाचेभ्यो नमः। ॐ गुह्यकेभ्यो नमः। ॐ सिद्धदेवताभ्यो नमः। ॐ औषधीभ्यो नमः। ॐ भूतग्रामाय नमः। ॐ चतुर्विधभूतग्रामाय नमः।

गौरीतिलकमण्डले ये देवास्तान् सर्वानावाहयामि स्थापयामि। इत्यावाह्य संस्थाप्य उपचारैः सम्पूजयेत्। आवाहयामि, श्री गौरी तिलक मंडल देवताभ्यो नमः।

**पूजनम् –** पाद्यं, अर्घ्यं, आचमनीयं, सर्वांगे स्नानीयं जलं समर्पयामि, पंचामृत स्नानं, शुद्धोदक स्नानं समर्पयामि, यज्ञोपवीतं, वस्त्रं, उपवस्त्रं समर्पयामि, आचमनीयं जलं, सुगन्धि द्रव्यं समर्पयामि, चंदनं, कुंकुमं, हरिद्रां, सिंदूरं समर्पयामि, अक्षतान, पुष्पाणि, दुर्वांकुरान्, बिल्वपत्राणि समर्पयामि, धूपं, दीपं, नैवेद्यं निवेदयामि, मध्ये पानीयं, आचमनीयं जलं ॐ प्राणाय स्वाहा, व्यानाय स्वाहा,अपानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा। उत्तरापोशनं, करोद्वर्तनार्थे चंदनं समर्पयामि, ऋतुफलं, सताम्बूल पूगीफलं, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्य दक्षिणां समर्पयामि, नमस्करोमि।

**प्रार्थनाम्-** ॐ त्वं वैष्णवी शक्तिरनन्तवीर्या, विश्वस्य बीजं परमासि माया।
सम्मोहितं देवि समस्तमेतत्, त्वं वै प्रसन्ना भुवि मुक्तिहेतुः।।
विद्याः समस्तास्तव देवि भेदाः, स्त्रियः समस्ताः सकला जगत्सु।
त्वयैकया पूरितमम्बयैतत्, का ते स्तुतिः स्तव्यपरा परोक्तिः।।

प्रार्थना पूर्वकम् नमस्करोमि, श्री गौरी तिलक मंडल देवताभ्यो नमः।

ॐ अनया पूजया श्री गौरीतिलक मंडल देवताः प्रीयन्तां न मम।।इति भूमौ जलं क्षिपेत्।।

श्रीगौरीतिलकमंडल देवता पूजन कर्मणो यन्न्यूनादिरिक्तं गौरीतिलक प्रसादात्परिपूर्णमस्तु।।

## कूष्माण्ड बलिदानम्

**संकल्प** - देशकालाद्युचार्य... मम सकुटुम्बस्य सर्वाऽरिष्ट प्रशान्ति सर्वाभीष्ट कामसिद्धि कल्पोक्तफलावाप्तिद्वारा श्रीमहाकाली महालक्ष्मी महासरस्वती त्रिगुणात्मिका स्वरूपिणी श्री दुर्गादेवी प्रीत्यर्थं कूष्माण्ड बलिदानमहं करिष्ये।

## कूष्माण्ड पूजनम्

ॐ नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्।। इत्यनेन दुर्गादेवी पंचोपचारैः सम्पूज्य, तत्पुरतः स्वयमुदंग मुखो बलिं प्राङ्मुखं च पीठे वस्त्रगुण्ठितं कूष्माण्डं निधाय कूष्माण्डबलये नमः, इत्यनेन गन्ध पुष्पादि पंचोपचारैः सम्पूज्य, अभिमन्त्रयेत्।

ॐ पशुस्त्वं बलिरूपेण, मम भाग्यादवस्थितः। प्रणमामि ततः सर्वरूपिणं बलिरूपिणम्।।
चण्डिकाप्रीतिदानेन दातुरापद् विनाशनम्। चामुण्डाबलिरूपाय बले तुभ्यं नमोऽस्तु ते।।
यज्ञार्थ बलयः सृष्टाः स्वयमेव स्वयंभुवा। अतस्त्वां घातयास्यद्य यस्माद्यज्ञे मतो वधः।।
ततः शस्त्रं गन्धादिनां सम्पूज्य, अभिमन्त्रयेत्– ऐं ह्रीं श्रीं रसनात्वं चण्डिकायाः सुरलोक प्रसाधकः। इति ह्रां ह्रीं खड्ग, आं हुं फट्, इति पठित्वा हस्ते शस्त्रं गृहीत्वा वीरासन मुद्रया –
ॐ कालि कालि वज्रेश्वरि लोहदण्डाय नमः। इति पठनेन कूष्माण्डं छेदयेत्, छेदनावसरे न विलोकयेत्। ततश्छिन्ने बलौ कुंकुममनुलेपयेत्। कौशिकि रुधिरेणाप्यायताम् इति देव्यै अर्धम् निवेद्य, अवशिष्टार्धस्य तेनैव खड्गेन पुनः पंचभागान् कृत्वा पूतनायै बलिभागं निवेदयामि। चरक्य बलिभागं निवेदयामि। विदार्यै बलिभागं निवेदयामि। पापराक्षस्यै बलिभागं निवेदयामि। क्षेत्रपालं बलिभागं विवेदयामि।

### पुष्पांजलिम्-

ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः, स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
दारिद्रय दुःख भय हारिणि का त्वदन्या, सर्वोपकारकरणाय सदार्द्रचित्ता।।

**शक्ति स्वरूपा सुमंगलकारिणी, काज सवाँरती हो सबके माँ।**
**होति कृपा जो तुम्हारी रहे तो, बने सब काज न देर लगे माँ।।**
**सीता ने पूजा तुम्हारी किया तो, प्रसन्न हुई वर राम मिले माँ।।**
**मेरी भी कामना पूर्ण करो, मातु गौरी हमारा भी कष्ट हरो माँ।।**

## ।। श्री रामभद्र मंडल पूजनम् ।।

**ध्यानम्-** ॐ रक्ताम्भोजदलाभिरामनयनम् पीताम्बरालंकृतम्,
श्यामांगम् द्विभुजम् प्रसन्नवदनम् श्रीसीतया शोभितम्।
कारूण्यामृतसागरम् प्रियगणैर्भ्रात्रादिभिर्भावितम्,
वन्दे विष्णुशिवादि सेव्यमनिशम् भक्तेष्टसिद्धिप्रदम्।।

**आवाहनम्-** ॐ माहेश्वरि नमस्तुभ्यमिहागच्छ शिवप्रिये।
पूर्वभागे समातिष्ठ गृह्यतां पूजनं मम।। ॐ माहेश्वर्यै नमः।।
ॐ गणाधिपो नमस्तुभ्यमिहागच्छ गजानन।
पूर्वमागे समातिष्ठ पूजनं गृह्यतामिदम्।। ॐ गणाधिपतये नमः।।
ॐ महाशक्ते नमस्तुभ्यमिहागच्छ शुभप्रदे।
पूर्वभागे समातिष्ठ पूजनं प्रतिगृह्यताम्।। ॐ महाशक्तये नमः।।
ॐ महालक्ष्मि नमस्तुभ्यमिहागच्छ जगद्विते।
याम्यभागे समातिष्ठ पूजनं स्वीकुरुष्व मे।। ॐ महालक्ष्म्यै नमः।।
ॐ महादुर्गे नमस्तुभ्यमिहागच्छ सुरार्चिते।
पीठस्य पश्चिमे भागे तिष्ठ स्वीकुरु पूजनम्।। ॐ महादुर्गायै नमः।।
ॐ भो गायत्रि नमस्तुभ्यमिहागच्छ शुभप्रदे।
तिष्ठ पीठोत्तरे भागे पूजनं प्रतिगृह्यताम्।। ॐ गायत्र्यै नमः।।
ॐ भो सावित्रि नमस्तुभ्यमिहागच्छ शुभ प्रदे।
तिष्ठ पीठोत्तरे भागे पूजनं स्वीकुरुश्व मे।। ॐ सावित्र्यै नमः।।
ॐ सरस्वति नमस्तुभ्यमिच्छ शुचिव्रते।
पीठस्योत्तरे भागे तिष्ठ पूजां प्रगृह्यताम्।। ॐ सरस्वत्यै नमः।।
ॐ नमो वः सर्वमातृभ्यः इहागच्छत तिष्ठत।
पीठस्योत्तरे भागे गृह्यतां मम पूजनम्।। ॐ सर्वमातृभ्यो नमः।।
ॐ सिद्धिदेवि नमस्तुभ्यमिहागच्छ सुखप्रदे।
ईशाने त्वं सदा तिष्ठ पूजनं प्रतिगृह्यताम्।। ॐ सिद्धिदेव्यै नमः।।
ॐ बुद्धे नमोऽस्तुते मातरिहागच्छ सुभाषिणी।
ईशाने हि समाविष्ठ पूजनं स्वीकुरुष्व मे।। ॐ बुद्धिदेव्यै नमः।।
ॐ लोक मातर्नमस्तुभ्यमिहागच्छ शुभप्रदे।
अग्निकोणे समाविष्ठ पूजनं प्रतिगृहानाम्।। ॐ लोकमात्रे नमः।।

ॐ महादेवि नमस्तुभ्यमिहागच्छ वरानने।
नैर्ऋत्ये तिष्ठ देवेशि पूजनं स्वीकुरुष्व मे।। ॐ महादेव्यै नमः।।
ॐ देवमातर्नमस्तुभ्यमिहागच्छ कृपाम्बुधे।
वायव्ये देवि संतिष्ठ पूजनं प्रतिगृह्यताम्।। ॐ देवमात्रे नमः।।
ॐ नमो वो वास्तुदेवेभ्यः इहागच्छतु तिष्ठतु।
याम्यनैर्ऋत्योर्मध्ये गृह्यन्तां मम पूजनम्।। ॐ वास्तुदेवेभ्यो नमः।।
ॐ नमो वो लोकपालेभ्यः इहागच्छतु तिष्ठतु।
रक्षोवरुणयोर्मध्ये गृह्यतां पूजनं मम।। ॐ लोकपालेभ्यो नमः।।
ॐ भो मनोत्वमिहागच्छ नमस्तुभ्यं सुखप्रदे।
पश्चिमे ह्युपविश्याथ पूजनं प्रतिगृह्यताम्।। ॐ श्री मनवे नमः।।
ॐ नमो वः श्रीवसिष्ठाद्या इहागच्छत तिष्ठत।
वायुवरुणयोर्मध्ये गृह्यतां पूजनं मम।। ॐ वसिष्ठादिभ्यो नमः।।
ॐ अधिप्रत्यधिदेवेभ्यः इहागच्छत तिष्ठत।
मारुतोत्तरयोर्मध्ये गृह्यतां पूजनं मम।। ॐ अधिप्रत्यधिदेवेभ्यो नमः।।
ॐ भो ब्रह्मन् त्वमिहागच्छ नमस्तुभ्यं सुराधिप।
उत्तरेशानयोर्मध्ये तिष्ठ गृह्णीष्व मेऽर्चनम्।। ॐ ब्रह्मणे नमः।।
नमोऽस्तु वो नवग्रहा इहागच्छत तिष्ठत।
ईशानपूर्वयोर्मध्ये पूजनं प्रतिगृह्यताम्।। ॐ श्री नवग्रहेभ्यो नमः।।
ॐ नमो वो दशदिक्पाला इहा गच्छत तिष्ठत।
पूर्वाऽग्निकोणयोर्मध्ये गृह्यतां पूजनं मम।। ॐ दशदिक्पालेभ्यो नमः।।
ॐ गौरीपते नमस्तुभ्यमिहागच्छ महेश्वर।
अग्निदक्षिणयोर्मध्ये तिष्ठ पूजां गृहाण मे।। ॐ गौरीपतये नमः।।
ॐ अयोध्यायै नमस्तुभ्यमिहागच्छ सुखाम्बुधे।
मध्यभागे समा तिष्ठ पूजनं प्रतिगृह्यताम्।। ॐ अयोध्यायै नमः।।
ॐ श्री सरय्वीश्वराराध्ये नमस्तुभ्यं जगद्धिते।
श्रीकोशलोत्तरे भागे तिष्ठ पूजां प्रगृह्यताम्।। ॐ श्रोसरय्यैनमः।।
ॐ गंगादेवि महाभागे इहागच्छ नमोऽस्तु ते।
पूर्वभागे समातिष्ठ पूजनं प्रतिगृह्यताम्।। ॐ श्रीगंगादेव्यै नमः।।

ॐ भो भूशक्ते नमस्तुभ्यमिहागच्छ शुभप्रदे।
याम्यभागे समातिष्ठ पूजनं स्वीकुरुष्व मे।। ॐ भूशक्तये नमः।।
ॐ वह्निवीज नमस्तुभ्यमिहागच्छ सुरार्चितः।
याम्यभागे सदा तिष्ठ पूजनं संगृहाण मे।। ॐ वह्निवीजाय नमः।।
ॐ भो केशरिन् नमस्तुभ्यमिहागच्छ शुचिव्रत।
याम्यभागे सदा तिष्ठ पूजनं प्रतिगृह्यताम्।। ॐ श्रीकेशरिणे नमः।।
ॐ भो सुषेण नमस्तुभ्यमिहागच्छ शुभप्रद।
याम्यभागे समाविष्ठ पूजनं स्वीकुरुष्व मे।। ॐ सुषेणाय नमः।।
ॐ ऋक्षराज नमस्तुभ्यमिहागच्छ महावल।
याम्यभागे समाविष्ठ पूजनं प्रतिगृह्यताम्।। ॐ ऋक्षराजाय नमः।।
ॐ भो अंगद नमस्तुभ्यमिहागच्छ दृढ़व्रत।
याम्यभागे समातिष्ठ संगृहाण ममाऽर्चनम्।। ॐ श्री अङ्गदायनमः।।
ॐ भो सुग्रीव नमस्तुभ्यमिहागच्छ प्रभोः प्रिये।
दक्षिणे ह्युपविश्याथ गृह्यतामर्चनं मम।। ॐ श्रीसुग्रीवाय नमः।।
ॐ श्री विमलादिशक्तिभ्य इहागच्छत वो नमः।
पश्चिमे ह्युपविश्याथ पूजनं प्रतिगृह्यताम्।। ॐ श्री विमलादिशक्तिभ्यो नमः।।
ॐ विभीषणाय नमस्तुभ्यमिहागच्छ प्रभोः प्रिये।
पीठकस्योत्तरे भागे पूजनं प्रतिगृह्यताम्।। ॐ विभीषणाय नमः।।
ॐ नमो वो मन्त्रिणश्चाष्टमिहागच्छत तिष्ठत।
पूर्वभागे मया दत्तं गृह्यतां पूजनं मम।। ॐ अष्टमन्त्रिभ्यो नमः।।
ॐ श्रीमतेचक्रवर्तीन्द्र इहागच्छ नमोऽस्तुते।
पूर्वभागे समातिष्ठ श्रीकौशल्यादिभिः सह।। ॐ सपत्नीकाय दशरथाय नमः।।
ॐ श्रीलक्ष्मण नमस्तुभ्यमिहागच्छ सहप्रियः।
याम्यभागे समाविष्ठ पूजनं संगृहाण मे।। ॐ सपत्नीकाय लक्ष्मणाय नमः।।
ॐ श्रीभरत नमस्तुभ्यमिहागच्छ प्रियायुतः।
पीठकस्योत्तरे भागे तिष्ठ पूजां गृहाण मे।। ॐ सपत्नीकाय भरताय नमः।।
ॐ श्रीशत्रुघ्न नमस्तुभ्यमिहागच्छ प्रियायुतः।
पीठस्य पश्चिम भागे पूजनं स्वीकुरुष्व मे।। ॐ सपत्नीकाय शत्रुघ्नाय नमः।।

ॐ श्रीहनुमन् नमस्तुभ्यमिहागच्छ कृपानिधे।
पूर्वभागे समातिष्ठ पूजनं स्वीकुरु प्रभो।। ॐ श्री हनुमते नमः।।

**श्री राम ध्यानम्-** ॐ नीलाम्बुजश्यामलकोमलांगम्, सीतासमारोपितवामभागम्।
पाणौमहासायकचारुचापम्, नमामि रामं रघुवंशनाथम्।।

ॐ वरेण्यः शारण्यः कपिपतिसखश्चान्तविधुरो,
ललाटे काश्मीरो रुचिरगतिभंगः शशिमुखः।
नराकारो रामो यतिपतिनुतः संसृतिहरो,
रमानाथो रामो रमतु मम चित्ते तु सततम्।।

ॐ आगच्छ देवदेवेश जानक्या सह राघव। गृहाण मम पूजां च वायुपुत्रादिभिर्युतः।।
ॐ सांगाय सपरिवाराय भगवान श्रीरामभद्राय नमः। आवाहयामि स्थापयामि ।।

## पूजनम्

पाद्यं, अर्घ्य, आचमनीयं, सर्वांगे स्नानीयं जलं समर्पयामि, पंचामृत स्नानं, शुद्धोदक स्नानं समर्पयामि, यज्ञोपवीतं, वस्त्रं, उपवस्त्रं समर्पयामि, आचमनीयं जलं, सुगन्धि द्रव्यं समर्पयामि, चंदनं, कुंकुमं, हरिद्रां, सिंदूरं समर्पयामि, अक्षतान, पुष्पाणि, दुर्वाकुरान्, बिल्वपत्राणि समर्पयामि, धूपं, दीपं, नैवेद्यं निवेदयामि, मध्ये पानीयं, आचमनीयं जलं
ॐ प्राणाय स्वाहा, व्यानाय स्वाहा,अपानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा। उत्तरापोशनं, करोद्वर्तनार्थे चंदनं समर्पयामि, ॠतुफलं, सताम्बूल पूगीफलं, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्य दक्षिणां समर्पयामि, नमस्करोमि।

## प्रार्थनाम्

ॐ नीलाम्बुजश्यामलकोमलांगम्, सीतासमारोपितवामभागम्।
पाणौ महासायकचारूचापं, नमामि रामं रघुवंशनाथम्।।

श्री रामाय रामभद्राय रामचन्द्राय वेधसे, रघुनाथाय नाथाय सीताया पतये नमः ।।

लोकाभिरामं रणरंगधीरं, राजीवनेत्रं रघुवंशनाथम्।
कारुण्यरूपं करुणाकरं तं, श्रीरामचन्द्रं शरणं प्रपद्ये ।।

श्री रामभद्र सहित श्री रामभद्र मंडलोक्त देवताभ्यो नमः। प्रार्थनापूर्वकं नमस्करोमि ।

ॐ अनया पूजया श्री रामभद्र मंडल देवताः प्रीयन्तां न मम।। इति भूमौ जलं क्षिपेत्।।
श्रीरामभद्रमंडल देवता पूजन कर्मणो यन्न्यूनादिरिक्तं रामभद्र प्रसादात्परिपूर्णमस्तु।।

# श्री प्रधान यज्ञेश्वर पूजनम्

## ध्यानम् (श्री विष्णु जी)

ॐ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशम्,
विश्वाधारं गगनसदृशं मेघवर्ण सुभांगम्।
लक्ष्मीकान्तं कमलनयनं योगिभिः ध्यानगम्यम्,
वन्दे विष्णुं भवभयहरंसर्वलोकैक नाथम्।।
ॐ प्रधान यज्ञेश्वर भगवान श्री लक्ष्मीनारायणाभ्याम् नमः। ध्यानम् समर्पयामि।

अथवा

## ध्यानम् (श्री शिव जी)

ॐ ध्यायेन्नित्यं महेशं रजतगिरि निभं चारुचन्द्रा वतंसं,
रत्नाकल्पोज्वलांगं परशुमृगवरा भीति हस्तं प्रसन्नम्।
पद्मासीनं समन्तात्स्तुतममरगणैः व्याघ्रकृत्तिं वसानम्,
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम्।।
ॐ प्रधान यज्ञेश्वर भगवान श्री साम्बसदाशिवाय नमः। ध्यानम् समर्पयामि।

## ध्यानम् (श्री दुर्गा जी)

ॐ विद्युद्दाम् समप्रभाम् मृगपति स्कन्धस्थिताम् भीषणाम्,
कन्याभिः करवाल खेट विलसद् धस्ताभिरा सेवताम्।
हस्तैश्चक्र गदासि खेट विशिखां चापम् गुणम् तर्जनीम्,
बिभ्राणाम् अनलात्मिकाम् शशिधराम् दुर्गाम् त्रिनेत्राम् भजे।।
ॐ प्रधान यज्ञेश्वरि श्रीमद् आद्यशक्त्यै नमः। ध्यानम् समर्पयामि।

## अग्न्युत्तारण विधिः

तत्र आचार्यः पात्रान्तरे प्रतिमां निधाय, घृतेन आभ्यज्य, उपरि जलधारां कुर्यात्।
ॐ समुद्रस्य त्वावकयाग्ने परिव्ययामसि। पावको अस्म्मभ्य ग्वं शिवो भव।।
ॐ हिमस्य त्वा जरायुणाग्ग्ने परिव्ययामसि। पावुको अस्म्मब्भ्य ग्वं शिवो भव।।
ॐ अपामिदं न्ययन ग्वं समुद्रस्य निवेशनम्। अन्न्यास्ते अस्म्मत् तपन्तु हेतयः पावको अस्म्मब्भ्य ग्वं शिवो भव।।
ॐ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे। अन्न्यांस्ते अस्म्मत् तपन्तु हेतयः पावको अस्म्मब्भ्य ग्वं शिवो भव।।

ॐ प्राणदा अपानदा व्यानदा वर्च्चोदा वरिवोदाः। अन्याँस्ते अस्म्मत्तपन्तु हेतयः पावको अस्म्मभ्य ग्वं शिवो भव।।

## प्राण प्रतिष्ठाम्

ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं सः अस्यां मूर्तौ प्राणाः इह प्राणाः।(पुनः)
ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं सः अस्यां मूर्तौ जीव इह स्थितः।(पुनः)
ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं सः अस्यां मूर्तौ सर्वेन्द्रियाणि वाङ्–मनस्त्वक्–चक्षुः–श्रोत्र–जिह्वा–घ्राण–पाणि–पाद–पायूस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा।
ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ग्वं समिमं दधातु। विश्वेदेवास इह मादयन्तामो 3 प्रतिष्ठ।।
ॐ अस्यै प्राणाः प्रतिष्ठन्तु, अस्यै प्राणाः क्षरन्तु च।अस्यै देवत्वमर्चायै, मामहेति च कश्चन।।
ॐ प्रधान यज्ञेश्वर भगवान श्री......... सुप्रतिष्ठिते वरदे भवेताम्।।

## आसनम्

ॐ पुरुष एवेद ग्वं सर्व यद्भूतं यच्च भाव्यम्।उतामृतत्वस्येशानो यदन्नेनाति रोहति।।
श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः।आसनम् समर्पयामि।
**पाद्यं, अर्घ्यं, आचमनीयम् जलम् समर्पयामि।** श्री प्रधान यज्ञेश्वर भगवान श्री..... नमः।

## पंचामृत स्नानम्

ॐ पंचनद्यः सरस्वतीमपियन्ति सस्त्रोतसः।सरस्वती तु पंचधासो देशे भवत्सरित्।।
ॐ पयो दधि घृतं चैव, मधु शर्करया युतं।पंचामृतं मयानीतं, स्नानार्थ प्रतिगृह्यताम्।।
श्री प्रधान यज्ञेश्वर भगवान श्री...... नमः।मिलित पंचामृत स्नानम् समर्पयामि।

## शुद्धोदक स्नानम्

ॐ शुद्धवालः सर्व शुद्धवालो मणिवालस्त आश्विनाः श्येतः श्येताक्षोरुणस्ते रुद्राय पशुपतये कर्णा यामा अवलिप्ता रौद्रा नभोरूपाः पार्ज्जन्याः।।
ॐ मंदाकिन्यास्तु यद् वारि, सर्व पाप हरं शुभम्।तदिदं कल्पितं देवाः, स्नानार्थं प्रतिगृह्यताम्।।
श्रीप्रधानयज्ञेश्वर भगवान श्री...नमः।शुद्धोदक स्नानं समर्पयामि।।

## यज्ञोपवीतम्

ॐ ब्रम्ह मयज्ञानम् प्रथमम् पुरस्तात् दिसीमतः सुरुचो वेन आवः। सबुध्न्या उपमा अस्यविष्टाः सतश्च योनिम सतश्चविवः।।
ॐ नवभिस्तन्तुभिर्युक्तं, त्रिगुणं देवतामयम्।उपवीतं मया दत्तं, गृहाण परमेश्वरः।।
श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। यज्ञोपवीतम् समर्पयामि।।

## वस्त्रम्–उपवस्त्रम्

ॐ युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः। तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः।।

ॐ शीत वातोष्ण सन्त्राणं, लज्जाया रक्षणं परम्। देहालंकरणं वस्त्रं अतः शांतिं प्रयच्छ मे।।

श्री प्रधान यज्ञेश्वर भगवान श्री.... नमः।वस्त्रं–उपवस्त्रार्थे रक्तसूत्रं समर्पयामि।।

## आचमनीयम् जलम्

ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये।शंयोरभिस्त्र वन्तुनः।।

श्री प्रधानयज्ञेश्वर भगवान श्री.... नमः।यज्ञोपवीतांते, वस्त्रान्ते आचमनीयं जलं समर्पयामि।।

## सुगन्धित द्रव्यम्

ॐ अहिरिवभोगैः पर्येति बाहुंज्याया हेतिम्परिबाधमानः। हस्तग्घ्नो विश्वा वयुना निविदान्पुमान्पुमा ग्वं सम्परिपातु विश्वतः।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। सुगन्धित द्रव्यं समर्पयामि।

## चंदनम्–कुंकुमम्–हरिद्राम्–सिन्दूरम्

ॐ त्वां गन्धर्वा अखनस्त्वाम् इन्द्रस्त्वाम् बृहस्पतिः।त्वामोषधे सोमो राजा विद्वान यक्षमाद मुच्यत।।

ॐ श्री खण्डं चंदनं दिव्यं, गंधाढ्यं सुमनोहरम्।विलेपनं सुरश्रेष्ठ, चंदनं प्रतिगृह्यताम्।।

ॐ गंधद्वारां दुराधर्षाम्, नित्यपुष्टां करीषिणीम्।ईश्वरीं सर्व भूतानां, तामिहो पह्वये श्रियम्।।

ॐ हरिद्रां निर्मितं देव, सौभाग्यं सुखसम्पदाम्।अतस्त्वां पूजयिष्यामि, गृहाण परमेश्वर।।

ॐ सिंदूरं शोभनं दिव्यं, सौभाग्यं प्रियवर्धनम्।सुखदं मोक्षदं चैव, सिंदूरं प्रतिगृह्यताम्।।

श्री प्रधान यज्ञेश्वर भगवान श्री....... नमः।चंदनं–कुंकुमं–हरिद्रां–सिन्दूरं समर्पयामि।।

## अक्षतान्

ॐ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत।अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्न विन्द्र ते हरी।।

ॐ अक्षताश्च सुरश्रेष्ठ, कुंकुमाक्ता सुशोभिताः।मया निवेदिता भक्त्या, गृहाण परमेश्वरः।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। अक्षतान् समर्पयामि।।

## पुष्पम्–पुष्पमालाम्

ॐ ओषधीः प्रतिमो दद्ध्वं पुष्पवतीः प्रसूवरीः। अश्वा इव सजित्वरीः वीरूधः पारयिष्णवः।।

ॐ माल्यादीनि सुगन्धीनि, मालत्यादीनि वै प्रभो।मया हृतानि पुष्पाणि, पूजार्थं प्रतिगृह्यताम्।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। पुष्पं–पुष्पमालां समर्पयामि।।

## दूर्वांकुरान्

ॐ काण्डात् काण्डात् प्ररोहन्ती परुषः परुषष्परि।एवा नो दूर्वे प्रतनु सहस्त्रेण शतेन च।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः।दूर्वांकुरान् समर्पयामि।।

## तुलसी पत्राणि

ॐ यत्पुरुषं व्ययदधुः कतिधाव्य कल्प्पयन्।मुखंकिमस्यासीत् किम्बाहू किमूरू पादा उच्येते।।

ॐ तुलसीम् हेमरूपाम् च, रत्नरूपान्च मंजरीम्। भव मोक्ष प्रदाम् तुभ्यम्, अर्पयामि हरिप्रियाम्।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः।तुलसी पत्रात्रि समर्पयामि।।

## बिल्वपत्राणि

ॐ नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुब्भ्याय चा हनन्याय च।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। बिल्वपत्राणि समर्पयामि।।

## धूपम्

ॐ धूरसि धूर्व्व धूर्व्वन्तं धूर्व्व तं योऽस्म्मान् धूर्व्वति तं धूर्व्वयं वयं धूर्व्वामः।

देवानामसि वह्नितम ग्वं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्।।

ॐ वनस्पति रसोद्भूतो, गंधाढ्यो गंध उत्तमः। आघ्रेयः सर्व देवानां, धूपोऽयं प्रतिगृह्यताम्।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। धूपं आघ्रापयामि।

## दीपम्

ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा, अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा, सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा, ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा।।

ॐ साज्यं च वर्ति संयुक्तं, वह्निना योजितं मया।दीपं गृहाण देवेश, त्रैलोक्य तिमिरापहम्।।

श्री प्रधानयज्ञेश्वर भगवान श्री..... नमः।दीपम् प्रदर्शयामि।। **हस्तौ प्रच्क्षाल्य।।**

## नैवेद्यम्

ॐ अन्नपते अन्नस्य नो देह्यनमीवस्य शुष्मिणः।प्रप्र दातारं तारिष ऊर्जम् नो धेहि द्विपदे चतुष्पदे।।

ॐ शर्करा खण्ड खाद्यानि, दधि क्षीर घृतानि च।आहारं भक्ष्य भोज्यं च, नैवेद्यं प्रतिगृह्यताम्।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। नैवेद्यम् निवेदयामि।।

## आचमनीयम्

ॐ प्राणाय स्वाहा, अपानाय स्वाहा, उदानाय स्वाहा, व्यानाय स्वाहा, समानाय स्वाहा।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। आचमनीयम्, मध्येपानीयम्, उत्तरापोशनम् समर्पयामि।

## करोद्वर्तनार्थे चन्दनम्

ॐ अ ग्वं शुना ते अ ग्वं शुः पृच्यतां परुषा परुः। गंधस्ते सोम मवतु मदाय रसो अच्युतः।।

ॐ चंदनं मलयोद्भूतं, कस्तूर्यादि समन्वितम्। करोद्वर्तनकं देव, गृहाण परमेश्वर।।

श्री प्रधान यज्ञेश्वर भगवान श्री........ नमः। करोद्वर्तनार्थे चन्दनम् समर्पयामि।।

## ऋतुफलम्

ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पति प्रसूतास्ता नो मुंचन्त्व ग्वं हसः।।

ॐ इदं फलं मया देव, स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। ऋतुफलम् समर्पयामि।।

## सताम्बूल-पूगीफलम्

ॐ पातन्नो अश्विना दिवा पाहि नक्त ग्वं सरस्वती। दैव्या होतारा भिषजा पातमिन्द्र ग्वं सचासुते।।

ॐ पूगीफलं महदिव्यं, नागवल्ली दलैर्युतम्। एलादि चूर्ण संयुक्तं, ताम्बूलं प्रतिगृह्यताम्।।

श्री प्रधान यज्ञेश्वर भगवान श्री...... नमः। सताम्बूल-पूगीफलम् समर्पयामि।।

## द्रव्य दक्षिणाम्

ॐ हिरण्य गर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। सदाधार पृथिवीं द्यामुते मां कस्मै देवाय हविषा विधेम्।।

ॐ हिरण्यगर्भ गर्भस्थं, हेमबीजं विभावसोः। अनंत पुण्य फलदं अतः शान्तिं प्रयच्छ मे।।

श्री प्रधान यज्ञेश्वर भगवान श्री.... नमः। कृतायाः पूजायाः षाड्गुण्यार्थे द्रव्य दक्षिणां समर्पयामि।।

## कर्पूर नीराजनम्

ॐ इद ग्वं हविः प्रजननं मे अस्तु दशवीर ग्वं सर्व गण ग्वं स्वस्तये। आत्क्म-सनि प्रजासनि पशुसनि लोकसन्यभयसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त।।

ॐ कदली गर्भ सम्भूतं, कर्पूरं च प्रदीपितं। आरार्तिकमहं कुर्वे, पश्य मे वरदो भव।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। कर्पूर नीराजनं समर्पयामि।।

## मंत्र पुष्पांजलि:

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान् न्यासन्। तेह नाकम् महिमानः सचन्त यत्र पूर्वे साद्ध्याः सन्ति देवाः।।

ॐ नाना सुगन्ध पुष्पाणि, यथा कालोद्भवानि च।पुष्पांजलिः मया दत्ता, गृहाण परमेश्वरः।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। मंत्र पुष्पांजलिम् समर्पयामि।।

## मानसिक प्रदक्षिणाम्

ॐ यानि कानि च पापानि, जन्मान्तर कृतानि च।तानि सर्वाणि नश्यन्तु, प्रदक्षिणा पदे–पदे।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। प्रदक्षिणाम् समर्पयामि।।

## विशेष अर्घ्य:

ॐ नमस्ते देव देवेश, नमस्ते करुणाम्बुध।करुणाकर मे देव, गृहाणार्धम् नमोस्तुते।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। विशेषार्घ्यम् समर्पयामि।।

## प्रार्थनाम्

ॐ पापोहं पापकर्माहं पापात्मा पापसंभवः।त्राहि मां पुण्डरीकाक्ष (पार्वतीनाथ) सर्वपाप हरो भव।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... नमः। प्रार्थना पूर्वकम् नमस्करोमि।।

ॐ अनया पूजया श्री प्रधान यज्ञेश्वर भगवान श्री......प्रीयन्तां न मम।।इति भूमौ जलं क्षिपेत्।।

श्री प्रधान यज्ञेश्वर भगवान श्री......... पूजन कर्मणो यन्न्यूनादिरिक्तं........ प्रसादात्परिपूर्णमस्तु।।

## श्रीमद् भागवत महापुराण पूजनम्

श्रीमद् भागवत महापुराण वामे वेदिकायां तंडुलैः अष्टदलं कृत्वा मध्ये कलशं संस्थाप्य, कलश समीपे शालिग्रामं संस्थाप्य, तस्मिन् ईशानादि क्रमेण अष्टशक्तीनां स्थापनम्।

**ईशाने-** आवाहयामि देवेशीं, रुक्मिणीं कृष्ण बल्लभाम्।
गदा पद्म समायुक्तां, देवीम् आवाहयाम्यहम्।।

**ॐ रुक्मिण्यै नमः, रुक्मिणीम् आवाहयामि स्थापयामि।**

**पूर्वे-** सत्यभामां महाभागां, सर्व सिद्धि प्रदायिनीम्।
भौमासुर वधोपेतां, सत्यभामां आवाहयाम्यहम्।।

**ॐ सत्यभामायै नमः, सत्यभामाम् आवाहयामि स्थापयामि।**

ॐ मण्डूकादि परतत्वांत पीठ देवताभ्यो नमः।

आसन के लिए बिल्वपत्र चढायें– ॐ सिंहासनाय नमः।

प्राण प्रतिष्ठाम् – ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ग्वं समिमं दधातु। विश्वेदेवास इह मादयन्तामो 3 प्रतिष्ठ।। श्री महामृत्युंजय यंत्रस्थ देवताः सुप्रतिष्ठिताः वरदाः भवन्तु।। गंधाक्षतपुष्प जल का छींटा दें– ॐ महामृत्युंजय पादुकां पूजयामि तर्पयामि।

## प्रथमावरणम्–

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्। इति पूर्वे।

ॐ अघोरेभ्योथघोरेभ्यो घोर घोर तरेभ्यः।सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः।। इति दक्षिणे।

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः।भवे भवेनाति भवे भवस्व मां भवोद्भवाय नमः।। इति पश्चिमे।

ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बल विकरणाय नमो। बलाय नमो बलप्रमथनाय नमः सर्वभूत दमनाय नमो मनोन्मनाय नमः।। इति उत्तरे।

ॐ ईशानः सर्व विद्यानां ईश्वरः सर्व भूतानां।ब्रम्हाधिपतिर्ब्रम्हणोधिपतिर्ब्रम्हा शिवो मे अस्तु सदाशिवोम्।। इति ऊर्ध्वे।

जल का छींटा दें व पुष्पांजलि चढायें। ॐ पूजिताः तर्पिताः सन्तु।

ॐ अभीष्ट सिद्धि मे देहि शरणागत वत्सल। भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्।।

## द्वितीयावरणम्–

ॐ निवृत्यै नमः। ॐ प्रतिष्ठायै नमः। ॐ विद्यायै नमः। ॐ शान्त्यै नमः। ॐ शान्त्यतितायै नमः। जल का छींटा दें व पुष्पांजलि चढायें। ॐ पूजिताः तर्पिताः सन्तु। ॐ अभीष्ट सिद्धि मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्।।

## तृतीयावरणम्–

ॐ सूर्यमूर्तये नमः। ॐ इन्द्रमूर्तये नमः। ॐ क्षितिमूर्तये नमः। ॐ जलमूर्तये नमः। ॐ अग्निमूर्तये नमः। ॐ वायुमूर्तये नमः। ॐ आकाश मूर्तये नमः। ॐ यज्ञमूर्तये नमः। जल का छींटा दें व पुष्पांजलि चढायें। ॐ पूजिताः तर्पिताः सन्तु। ॐ अभीष्ट सिद्धि मे देहि शरणागत वत्सल। भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम्।।

## चतुर्थावरणम्–

ॐ रमायै नमः। ॐ शकायै नमः। ॐ प्रभायै नमः। ॐ ज्योतस्नायै नमः। ॐ पूर्णायै नमः। ॐ ऊषायै नमः। ॐ पुरण्यै नमः। ॐ सुधायै नमः। जल का छींटा दें व पुष्पांजलि चढायें। ॐ पूजिताः तर्पिताः सन्तु। ॐ अभीष्ट सिद्धि मे देहि शरणागत वत्सल।

भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम्।।

## पंचमावरणम्–

ॐ विश्वायै नमः। ॐ विश्वबन्धायै नमः। ॐ सितायै नमः। ॐ प्रहव्यायै नमः। ॐ सारायै नमः। ॐ संध्यायै नमः। ॐ शिवायै नमः। ॐ निशायै नमः। जल का छींटा दें व पुष्पांजलि चढायें। ॐ पूजिताः तर्पिताः सन्तु। ॐ अभीष्ट सिद्धि मे देहि शरणागत वत्सल। भक्त्या समर्पये तुभ्यं पंचमावरणार्चनम्।।

## षष्ठमावरणम्–

ॐ आर्यायै नमः। ॐ प्रज्ञायै नमः। ॐ प्रभायै नमः। ॐ मेधायै नमः। ॐ शान्त्यै नमः। ॐ कान्त्यै नमः। ॐ धृत्यै नमः। ॐ मत्स्यै नमः।

जल का छींटा दें व पुष्पांजलि चढायें। ॐ पूजिताः तर्पिताः सन्तु।

ॐ अभीष्ट सिद्धि मे देहि शरणागत वत्सल। भक्त्या समर्पये तुभ्यं षष्ठमावरणार्चनम्।।

## सप्तमावरणम् –

ॐ धरायै नमः। ॐ उमायै नमः। ॐ पावन्यै नमः। ॐ पद्मायै नमः। ॐ शान्त्यै नमः। ॐ अमोघायै नमः। ॐ जयायै नमः। ॐ अमलायै नमः।

जल का छींटा दें व पुष्पांजलि चढायें।ॐ पूजिताः तर्पिताः सन्तु।

ॐ अभीष्ट सिद्धि मे देहि शरणागत वत्सल।भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम्।।

## अष्टमावरणम्–

ॐ अनन्ताय नमः।ॐ सूक्ष्मायै नमः।ॐ शिवोत्मायै नमः।ॐ एकपदे नमः।ॐ एकरुद्राय नमः।ॐ त्रिमूर्तये नमः।ॐ श्रीकण्ठाय नमः।ॐ नीलकण्ठाय नमः।ॐ महाकालाय नमः।

जल का छींटा दें व पुष्पांजलि चढायें।ॐ पूजिताः तर्पिताः सन्तु।

ॐ अभीष्ट सिद्धि मे देहि शरणागतवत्सल।भक्त्या समर्पये तुभ्यं अष्टमावरणार्चनम्।।

## नवमावरणम्–

ॐ उमायै नमः। ॐ चण्डीश्वरायै नमः। ॐ नन्दिने नमः। ॐ महाकालाय नमः। ॐ गणेशाय नमः। ॐ वृषभाय नमः। ॐ भृंगी;षये नमः। ॐ स्कन्दाय नमः। जल का छींटा दें व पुष्पांजलि चढायें। ॐ पूजिताः तर्पिताः सन्तु।

ॐ अभीष्ट सिद्धि मे देहि शरणागतवत्सल।भक्त्या समर्पये तुभ्यं नवमावरणार्चनम्।।

## दशमावरणम्–

ॐ ब्राम्ह्यै नमः।ॐ माहेश्वर्यै नमः।ॐ कौमार्यै नमः।ॐ वैष्णव्यै नमः। ॐ वाराह्यै नमः। ॐ नारसिंह्यै नमः। ॐ इन्द्राण्यै नमः। ॐ चामुण्डायै नमः। ॐ महेश्वर्यै नमः। जल का छींटा दें व पुष्पांजलि चढायें।ॐ पूजिताः तर्पिताः सन्तु।

ॐ अभीष्ट सिद्धि मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं दशमावरणार्चनम्।।

## एकादशमावरणम्–

ॐ लं इन्द्राय नमः।ॐ इं अग्नये नमः।ॐ यं यमाय नमः।ॐ नं नै;ते नमः।ॐ वं वरुणाय नमः। ॐ यं वायवे नमः। ॐ सं सोमाय नमः। ॐ हं रुद्राय नमः। ॐ आं ब्रम्हणे नमः। ॐ ङ्कीं शेषाय नमः। जल का छींटा दें व पुष्पांजलि चढायें। ॐ पूजिताः तर्पिताः सन्तु।

ॐ अभीष्ट सिद्धि मे देहि शरणागतवत्सल।भक्त्या समर्पये तुभ्यं एकादशमावरणार्चनम्।।

## द्वादशमावरणम्–

ॐ बं बज्राय नमः। ॐ शं शक्तये नमः। ॐ दं दण्डाय नमः। ॐ खं खण्डगाय नमः। ॐ पं पाशाय नमः। ॐ अं अंकुशाय नमः। ॐ गं गदायै नमः। ॐ तं त्रिशूलाय नमः। ॐ पं पद्मायै नमः। ॐ चं चक्रायै नमः।

जल का छींटा दें व पुष्पांजलि चढायें। ॐ पूजिताः तर्पिताः सन्तु। ॐ अभीष्ट सिद्धि मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं द्वादशमावरणार्चनम्।।

## पूजनम्

**प्रतिष्ठाम्** - ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ग्वं समिमं दधातु। विश्वेदेवास इह मादयन्तामो 3 प्रतिष्ठ।।

श्री महामृत्युंजय यंत्रस्थ देवताः सुप्रतिष्ठिताः वरदाः भवन्तु।।

**सर्वोपचारार्थे सर्व सामाग्रीं समर्पयामि पूजयामि नमस्करोमि ।**

## श्री महामृत्युंजय मंत्र जप विधिः

**विनियोगः**- ॐ अस्य श्री महामृत्युंजय मन्त्रस्य वामदेव कहोल वशिष्ठाः ऋषयः पंक्तिः गायत्री उष्णिक् अनुष्टुप् छन्दांसि सदाशिव श्री त्र्यम्बक रुद्रो देवता श्रीं बीजं ह्रीं शक्तिः मम यजमानस्य वा मम शरीरे सर्वारिष्ट निवृत्ति पूर्वक सकल मनोरथ सिद्ध्यर्थे श्री महामृत्यंजय प्रीतये जपे विनियोगः।

**ऋष्यादिन्यासः**- ॐ वामदेव कहोल वशिष्ठाः ऋषयः मूर्ध्नि। ॐ पंक्तिः गायत्री उष्णिक् अनुष्टुप् छन्दांसि मुखे। ॐ सदाशिव श्री त्र्यम्बक रुद्रो देवतायै नमो हृदि। ॐ ह्रीं शक्तये नमो लिंगे। श्रीं बीजाय नमः पादयोः।।

**अंगन्यासः**- ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः ॐ त्र्यम्बकं ॐ नमो भगवते रुद्राय शूलपाणये स्वाहा हृदयाय नमः। ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः यजामहे ॐ नमो भगवते रुद्राय अमृत मूर्तये मां जीवय जीवय शिरसे स्वाहा। ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः सुगन्धिं पुष्टि वर्द्धनम् ॐ नमो भगवते रुद्राय चन्द्र शिरसे जटिने स्वाहा शिखायै वषट्। ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः उर्वारुकमिव बन्धनात् ॐ नमो भगवते त्रिपुरान्तकाय ॐ ह्रां ह्रीं कवचाय हुम्।

ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः मृत्योर्मुक्षीय ॐ नमो भगवते रुद्राय त्रिलोचनाय ऋग् यजुः साम मंत्राय नेत्रत्रयाय बौषट्। ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः मामृतात् ॐ नमो भगवते रुद्राय ॐ अग्नित्रयाय ज्वल ज्वालाय मां रक्ष रक्ष अघोराय अस्त्राय फट्।।

**मंत्र न्यासः-** ॐ त्र्यम्बकं शिरसि। ॐ यजामहे भ्रुवोः। ॐ सुगन्धिं नेत्रयोः।
ॐ पुष्टि वर्द्धनम् मुखे। ॐ उर्वारुक गण्डयोः। ॐ इव हृदये। ॐ बन्धनात् जठरे।
ॐ मृत्योः लिंगे। ॐ मुक्षीय ऊर्वो। ॐ मां जान्वोः। ॐ अमृतात् पादयोः।।

**ध्यानम्-** ॐ चन्द्रोद् भाषित मूर्धजं सुरपतिं पीयूष पात्रं वहत्,
हस्ताब्जे न दधत्सु दिव्य ममलैः हास्यास्य पंकेरुहम्।
सूर्येन्द्वग्नि विलोचनं करतले पाशाक्ष सूत्रां कुशाम्,
भोजं विभ्रत मक्षयं पशुपतिं मृत्युंजयं संस्मरे।।

**तत्पश्चात् लिंग मुद्रां प्रदर्श्य, जपं कुर्यात्।**

**मंत्रः- ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टि वर्द्धनम्। उर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय मामृतात् भूर्भुवः स्वः ॐ जूँ सः ह्रौं ॐ।।**

**जपार्पण-** ॐ मृत्युंजय महारुद्र, त्राहि मां शरणागतम्।
जन्म मृत्यु जरा व्याधिः, पीडितं कर्म बन्धनैः।।

## श्री गायत्री मंत्र जप विधिः

**विनियोगः-** ॐ अस्य श्री ब्रम्ह गायत्री मंत्रस्य सप्त व्याहृतीनां जमदग्नि भारद्वाज अत्रि गौतम कश्यप विश्वामित्र वशिष्ठाः ऋषयः गायत्री उष्णिक् अनुष्टुप् बृहती पंक्ति त्रिष्टुप् जगती छन्दासि अग्नि वायु सूर्य वृहस्पति वरुण इन्द्र विश्वेदेवा देवताः मम यजमानस्य सकल पितृ देवता प्रसन्नार्थम् एवं असद्गति प्राप्त......प्रेतस्य सद्गति प्राप्त्यर्थम् एवं सकल मनोरथ सिद्ध्यर्थे जपे विनियोगः।

**ऋष्यादिन्यासः-** ॐ जमदग्नि भारद्वाज अत्रि गौतम कश्यप विश्वामित्र वशिष्ठ ऋषिभ्यो नमः शिरसि। ॐ गायत्री उष्णिक् अनुष्टुप् बृहती पंक्ति त्रिष्टुप् जगती छन्दोभ्यो नमः मुखे। ॐ अग्नि वायु सूर्य वृहस्पति वरुण इन्द्र विश्वेदेवा देवताभ्यो नमः हृदये।।

**अंगन्यासः-** ॐ तत्सवितुर्ब्रम्हणे हृदयाय नमः। ॐ वरेण्यं विष्णवे शिरसे स्वाहा।
ॐ भर्गो देवस्य रुद्राय शिखायै वषट्। ॐ धीमहि ईश्वराय कवचाय हुम्।
ॐ धियो यो नः सदाशिवाय नेत्रत्रयाय बौषट्। ॐ प्रचोदयात् सर्वात्मने अस्त्राय फट्।।

**मंत्र न्यासः-** ॐ तत् नमः शिरसि। ॐ सवितुर्नमः भ्रुवोर्मध्ये। ॐ वरेण्यं नमः नेत्रयोः। ॐ भर्गो नमः मुखे। ॐ देवस्य नमः कंठे। ॐ धीमहि नमः हृदये ॐ धियो नमः नाभौ। ॐ यो नमः गुह्ये। ॐ नः नमः जानुनोः। ॐ प्रचोदयात् नमः पादयोः।।

**ध्यानम्-** ॐ मुक्ता विद्रुम हेम नील धवला छायैः मुखैः तीक्षणैः,

युक्तां इन्दु निबद्ध रत्न मुकुटां तत्वार्थ वर्णात्मिकाम्।

सावित्रीं वरदा भयांकुश कशां पाशं कपालं गुणम्,

शंखं चक्रमथा अरविन्द युगलं हस्तैः बहंती भजे।।

**तत्पश्चात् चतुर्बिशति मुदां प्रदर्श्य, जपं कुर्यात्।**

**मंत्रः- ॐ भूर्भुवः स्वः ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्।। जपोपरान्ते अष्टमुद्रां प्रदर्श्य, जपार्पण।।**



## ।। श्री गणपत्यथर्वशीर्षम् ।।

ॐ नमस्ते गणपतये। त्वमेव प्रत्यक्षम् तत्वमसि। त्वमेव केवलम् कर्तासि। त्वमेव केवलम् धर्तासि। त्वमेव केवलम् हर्तासि। त्वमेव सर्वम् खल्विदम् ब्रह्मासि। त्वम् साक्षात् आत्मासि नित्यम्। ऋतम् वच्मि। सत्यम् वच्मि। अव त्वम् माम्। अव वक्तारम्। अव श्रोतारम्। अव दातारम्। अव धातारम्। अवानूचानमव शिष्यम्। अव पश्चात्तात्। अव पुरस्तात्। अवोत्तरात्तात्। अव दक्षिणात्तात्। अव चोर्ध्वात्तात्। अवाधरात्तात्। सर्वतो माम् पाहि पाहि समन्तात्। त्वम् वाङ्मयः त्वम् चिन्मयः। त्वम् आनन्दमयः त्वम् ब्रह्ममयः। त्वम् सच्चिदानन्द अद्वितीयोऽसि। त्वम् प्रत्यक्षम् ब्रह्मासि। त्वम् ज्ञानमयो विज्ञान मयोऽसि। सर्वम् जगदिदम् त्वत्तो जायते। सर्वम् जगदिदम् त्वत्तः तिष्ठति। सर्वम् जगदिदम् त्वयि लयमेष्यति। सर्वम् जगदिदम् त्वयि प्रत्येति। त्वम् भूमिः आपः अनलः अनिलो नभः। त्वम् चत्वारि वाक् पदानि।। त्वम् गुणत्रयातीतः। त्वम् अवस्था त्रयातीतः। त्वम् देह त्रयातीतः। त्वम् काल त्रयातीतः। त्वम् मूलाधार स्थितोऽसि नित्यम्। त्वम् शक्ति त्रयात्मकः। त्वाम् योगिनो ध्यायन्ति नित्यम्। त्वम् ब्रम्हा त्वम् विष्णुः त्वम् रुद्रः त्वम् इन्द्रः त्वम् अग्निः त्वम्

वायुः त्वम् सूर्यः त्वम् चन्द्रमाः त्वम् ब्रम्ह भूर्भुवः स्वरोम्। गणादीन् पूर्वम् उच्चार्य वर्णादींस्तद नन्तरम्। अनुस्वारः परतरः। अर्धेन्दु लसितम्। तारेण रुद्धम्। एतद् तव मनुस्वरूपम्। गकारः पूर्व रूपम्। अकारो मध्यम रूपम्। अनुस्वारः चान्त्य रूपम्। बिन्दुः उत्तर रूपम्। नादः संधानम्। स ग्वं हिता सन्धिः। सैषा गणेश विद्या। गणक ॠषिः। निचृद् गायत्री छन्दः। गणपतिः देवता। ॐ गं गणपतये नमः। ॐ एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्।। एकदन्तम् चतुर्हस्तम् पाशमंकुश धारिणम्। रदम् च वरदम् हस्तैः बिभ्राणम् मूषकध्वजम्।। रक्तम् लम्बोदरम् शूर्प कर्णकम् रक्त वाससम्। रक्त गन्धानु लिप्तांगम् रक्त पुष्पैः सुपूजितम्।। भक्तानु कम्पिनम् देवम् जगत् कारणमच्युतम्। आविर्भूतम् च सृष्ट्यादौ प्रकृतेः पुरुषात्परम्।। एवम् ध्यायति यो नित्यम् स योगी योगिनाम् वरः।। नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदराय एकदन्ताय विघ्ननाशिने शिवसुताय श्री वरद मूर्तये नमः।। एतद् अथर्वशीर्षम् योऽधीते। स ब्रम्ह भूयाय कल्पते। स सर्व विघ्नैः न वाध्यते। स सर्वतः सुखमेधते। स पंच महापापात् प्रमुच्यते।। सायमधीयानो दिवस कृतम् पापम् नाशयति। प्रातरधीयानो रात्रि कृतम् पापम् नाशयति। सायं प्रातः प्रयुन्जाना अपापो भवति। सर्वत्र आधीयाना अपविघ्नो भवति। धर्मम् अर्थम् कामम् मोक्षम् च विन्दति।। इदम् अथर्वशीर्षम् अशिष्यायन देयम्। यो यदि मोहाद् दास्यति। स पापीयान् भवति।। सहस्त्रावर्तनाद्यम् यं काममधीते। तं तमनेन साधयेत्। अनेन गणपतिम् अभिसिंचति। स वाग्मी भवति। चतुर्थ्याम् अनश्नन् जपति। स विद्यावान् भवति। इति अथर्वण वाक्यम्।। ब्रम्हाद्याचरणम् विद्यान्न बिभेति कदाचनेति। यो दूर्वांकुरैः यजति। स वैश्रवणोपमो भवति। यो लाजैः यजति। स यशोवान् भवति। स मेधावान् भवति। यो मोदक सहस्त्रेण यजति। स वांछित फलम् अवाप्नोति। यः साज्य समिद्भिः यजति। स सर्वम् लभते स सर्वम् लभते।। अष्टौ ब्राम्हणान् सम्यग् ग्राहयित्वा सूर्य वर्चस्वी भवति। सूर्यग्रहे महानद्याम् प्रतिमासन्निधौ वा जप्त्वा सिद्ध मंत्रो भवति।। महाविघ्नात् प्रमुच्यते। महादोषात् प्रमुच्यते। महापापात् प्रमुच्यते। स सर्वविद् भवति स सर्वविद् भवति। य एवम् वेद। इत्युपनिषत्।।

# ।। अथ पुरुष सूक्तम् ।।

हरिः ॐ सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात्।स भूमि ग्वं सर्वतः स्पृत्वा त्यतिष्ट्ठद् दशांगुलम्।। पुरुष एवेद ग्वं सर्वम् यद्भूतम् यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति।।एतावानस्य महिमा तोज्या याँश्च पूरुषः।पादोस्यऽस्य विश्श्वा भूतानि त्रिपादस्यामृतम् दिवि।। त्रिपादूर्ध्व उदत्पुरुषः पादोऽस्येहा भवत्पुनः। ततो विष्वङ् व्यका मत्सा शना नशने अभि।। ततो विराड जायत विराजो अधि पूरुषः।स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः।।तस्माद्यज्ञात् सर्वहुतः सम्भृतम् पृषदाज्यम्।पशूँस्तांश्चके वायव्या नारण्या ग्राम्याश्च ये।। तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे। छन्दा ग्वं सि जज्ञिरे तस्माद्यजुस्तस्मादजायत।। तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्माद् तस्माज्जाता अजावयः। तं यज्ञं बर्हिषि प्रौक्षन्न् पुरुषं जातमग्ग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये।। यत्पुरुषं व्यदधुः कतिधा व्यय कल्प्पयन्। मुखं किमस्यासीत् किम् बाहू किमूरू पादा उच्च्येते।। ब्राम्हणोस्य मुखमासीद् बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पदभ्या ग्वं शूद्रो अजायत।। चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत।। नाब्भ्या आसीदन्तरिक्ष ग्वं शीर्ष्णो द्यौः समवर्तत।पदभ्यां भूमिर्दिशः श्रोश्त्रातथा लोकाँ2 अकल्पयन्।।यत्पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः।। सप्तास्या सन्परिधयस्त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबघ्नन् पुरुषं पशुम्।। यज्ञेन यज्ञमय जन्त देवास्तानि धर्माणि प्रथमान्यासन्।ते ह नाकं महिमानः सचन्त यत्र पूर्वे साद्ध्याः सन्ति देवाः हरिः ॐ।।

# ।। अथ रुद्र सूक्तम् ।।

हरिः ॐ भूः ॐ भुवः ॐ स्वः ॐ नमस्ते रुद्र मन्यव उतो त इषवे नमः।बाहुभ्यामुत ते नमः।। या ते रुद्र शिवा तनूरघोराऽपापकाशिनी।तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि।। यामिषुं गिरिशन्तहस्ते बिभर्यस्तवे।शिवां गिरित्र तां कुरु मा हि ग्वं सीः पुरुषं जगत्।।शिवेन वचसा त्वा गिरिशाऽच्छावदामसि। यथा नः सर्वमिज्जगद यक्ष्म ग्वं सुमना असत्।। अद्ध्यवो च दधि वक्ता प्रथमो दैव्यो भिषक्। अहींश्च सर्वान् जम्भयन्त् सर्वाश्च

यातुधान्योऽधराचीः परासुव।। असौ यस्ताम्रो अरुण उत बब्भ्रुः सुमंगलः। ये चैन ग्वं रुद्रा अभितो दिक्षुश्रिताः। सहस्त्रशोऽवैषा ग्वं हेड ईमहे।। असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृसन्न दृशनुदहार्यः स दृष्टो मृडयाति नः।। नमोऽस्तु नीलग्रीवाय सहस्त्राक्षाय मीढुषे। अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः।। प्रमुंच धन्व नस्त्वमुभयो रात्न्र्योज्याम्। याश्च ते हस्त इषवः परा ता भगवो व्वप।। विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ2 उत। अनेशन्नस्य या इषव आभुरस्य निषंगधिः।। या ते हेतिर्म्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्म मान् विश्व तस्त्व मयक्ष्मया परिभुज।। परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मन्नि धेहि तम्।। अवतत्य धनुष्ट्व ग्वं सहस्त्राक्ष शतेषुधे। निशीर्य शल्यानां मुखा शिवो नः सुमना भव।। नमस्त आयुधायाना तताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने।। मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः।। मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान्न् रुद्र भामिनो वधीर्ह विष्मन्तः सदमित्वा हवामहे ॐ स्वः ॐ भुवः ॐ भूः हरिः ॐ।।

## ।। अथ श्री सूक्तम् ।।

हरिः ॐ हिरण्यवर्णाम् हरिणीं सुवर्ण रजतस्त्राम्। चंद्राम् हिरण्यमयीम् लक्ष्मीम्जातवेदो ममावह।। ताम आवहजातवेदो लक्ष्मीमनपगामिनीम्। यस्याम् हिरण्यम् विन्देयम् गामश्वम् पुरुषानहम्।। अश्वपूर्वाम् रथमध्याम् हस्तिनाद् प्रमोदिनीम्। श्रियम् देवीम् उपह्वये श्रीर्मा देवी जुषताम्।। कांसोस्मिताम् हिरण्य प्राकाराम् आर्द्राम् ज्वलन्तीम् तृप्ताम् तर्पयन्तीम्। पद्मेस्थिताम् पद्म वर्णाम् तामिहोपह्वये श्रियम्।। चंद्राम् प्रभासाम् यशसा ज्वलन्तीम् श्रियम् लोकेदेव जुष्टामुदाराम्, ताम् पद्मनेमिम् शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यताम् त्वाम् वृणोमि।। आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः। तस्य फलानि तपसानुदन्तु मायान्त रायाश्च बाह्या अलक्ष्मीः।। उपैतु माम् देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिम् ददातु मे।। क्षुत्पिपासामलाम् ज्येष्ठा अलक्ष्मीर्नाशयाम्यहम्। अभूतिम् असमृद्धिम् च सर्वा निर्णुद मे गृहात्।। गंधद्वाराम् दुराधर्षाम् नित्यपुष्टाम् करीषिणीम्। ईश्वरीम् सर्व भूतानाम् तामिहोपह्वे श्रियम्।। मनसः कामं आकूतिं वाचः सत्यमशीमहि। पशूनाम् रूप मन्नस्य मयि श्रीः श्रयताम् यशः।। कर्दमेन

प्रजाभूतामयि संभव कर्दमः। श्रियम् वासय मे कुले मातरम् द्‌ममालिनीम्।। आपः सृजन्तु स्निग्धानि चिक्लीत् वस मे गृहे। नि च देवीम् मातरम् श्रियम् वासय मे कुले।। आर्द्राम् पुष्करिणीम् पुष्टिम् पिंगलाम् पद्‌म मालिनीम्। चंद्राम् हिरण्यमयीम् लक्ष्मींजातवेदो ममावह।। आर्द्राम् यः करिणीम् यष्टिम् सुवर्णाम् हेममालिनीम्। सूर्याम् हिरण्यमयीम् लक्ष्मीम् जातवेदो ममावह।। ताम आवहजातवेदो लक्ष्मीमनपगामिनीम्। यस्याम् हिरण्यम् संभूतम् गावो दास्योऽश्वान विन्देयम् पुरुषानहम्।। यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्। श्रियः पंचदशर्चम् च श्री कामः सततम् जपेत् हरिः ॐ।।

## श्री अग्नि सूक्तम्

प्रमंहिष्ठाय गायत ऋताव्नेबृहते शुक्रशोचिषे। उपस्तुतासो अग्नये।। 1।।
प्रसो अग्ने तवोतिभिः सुवीराभिस्तरति वाज कर्मभिः। यस्य त्वं सख्यमाविथ।। 2।।
तंगूर्धया स्वर्णरंदेवासो देवमरतिं दधन्विरे। देवत्रा हव्यमूहिषे।। 3।।
मानोह्वगीथा अतिथिं वसुरग्निः पुरु प्रशस्त एषः। यः सुहोता स्वध्वरः।। 4।।
भद्रोनो अग्निराहुतो भद्रारातिः सुभगः भद्रो अध्वरः। भद्रा उत प्रशस्तयः।। 5।।
यजिष्ठं त्वाव वृमहे देवं देवत्रा होतारम मर्त्यम्। अस्य यज्ञस्य सुक्रतुम्।। 6।।
तदग्ने द्युम्नमाभर यत्सासाहा सदने कं चिदत्रिणम्। मन्युंजनस्य दूढ्यम्।। 7।।
यद्वा उ विश्वपतिः शितः सुप्रीतो मनुषो विशे। विश्वेदग्निः प्रति रक्षांसि सेधति।। 8।।

1. अग्निमीले पुरोहितं, यज्ञस्य देवमृत्विजम्। होतारं रत्न धातमम्।।
2. अग्निः पूर्वेभि ऋषि भिरीड्यो नूतनैरुत। स देवाँ एह वक्षति।।
3. अग्निना रयिमश्नवत्, पोषमेव दिवे दिवे। यशसं वीर वत्तमम्।।
4. अग्ने यं यज्ञमध्वरं, विश्वतः परिभूरसि। स इद् देवेषु गच्छति।।
5. अग्निर्होता कविक्रतुः, सत्यश्चित्रश्श्रवस्तमः। देवो देवेभिरा गमत्।।
6. यदंग दाशुषे त्वमग्ने भद्रं करिष्यसि। तवेत् तत् सत्यमंगिरः।।

## ।। अथ बगला तंत्रोक्त कुंजिका स्तोत्र प्रयोग ।।

विनियोग–अस्य श्री सिद्ध कुंजिका स्तोत्र मंत्रस्य ब्रह्मा विष्णु महेश्वरा ऋषयः। गायत्र्युष्णिगनुष्टुप् छन्दांसि। श्री महाकाली महालक्ष्मी महासरस्वत्यो देवता। ह्लीं शक्ति सहिताय नंदा शाकंभरी भीमा शक्तयः, रक्तदंतिका दुर्गा भ्रामर्यो सहिताय ऐं बीजानि, क्लीं कीलकं, अग्नि वायु सूर्यास्तत्वानि, ऋग्यजुः सामानि स्वरूपाणि, श्रीत्रिगुणात्मिका श्री पीताम्बरा बगलामुखि स्वरूपिण्यै श्री महादुर्गा प्रसन्नार्थे जपे विनियोगः।

**अंगन्यास-** ह्लां हृदयाय नमः। ह्लीं शिरसे स्वाहा। ह्लूं शिखायै वषट्।
ह्लैं कवचाय हुं। ह्लौं नेत्रत्रयाय बौषट्। ह्लः अस्त्राय फट्।

**ध्यान-** लक्ष्मी प्रदान समये नवविद्रुमाभाम्, विद्या प्रदान समये शरदिन्दुशुभ्राम्।
विद्वेषि वर्ग विजयेऽपि तमालनीलाम्, देवीं त्रिलोक जननीं शरणं प्रपद्ये।।

**शापविमोचन-** ॐ श्रां श्रीं श्रूं फट् ऐं ह्लीं क्लीं ज्वल ज्वल प्रज्वल प्रज्वल ह्लीं क्लीं क्लीं स्त्रावय स्त्रावय वशिष्ठ नारद संवाद गौतम विश्वामित्र दक्षप्रजापति ब्रह्माण ऋषयः सर्वैश्वर्यकारिणि श्री दुर्गा देवता गायत्र्या शापानुग्रह कुरु कुरु हुं फट्।
ॐ ऐं ह्लीं क्लीं नमः शिवायै अमोघ कवच स्वरूपिण्यै ब्रह्म वशिष्ठ विश्वामित्र शापाद् विमुक्ता भव। ॐ क्रीं काल्यै कालि ह्लीं फट् स्वाहायै ऋग्वेद स्वरूपिण्यै ब्रह्म वशिष्ठ शापाद् विमुक्ता भव।

**मूलमंत्र-** ऐं ह्लीं क्लीं चामुण्डायै विच्चे। ॐ नमश्चामुण्डे श्री बगलानने अघोर अमोघे वरदे विच्चे ॐ ग्लौं हूं क्लीं जूं सः ज्वालय ज्वालय ज्वल ज्वल प्रज्वल प्रज्वल ऐं ह्लीं क्लीं चामुण्डायै विच्चे ज्वल हं सं लं क्षं फट् स्वाहा।

।। स्तोत्र।।

### ।। शिव उवाच ।।

श्रृणु देवि प्रवक्ष्यामि, कुंजिका स्तोत्रमुत्तमम्।
येन मंत्र प्रभावेण, चंडी जापः शुभो भवेत्।। 1 ।।

न कवचं नार्गला स्तोत्रं, कीलकं न रहस्यकम्।
न सूक्तं नापि ध्यानं च, न न्यासो न च वार्चनम्।। 2।।
कुंजिका पाठ मात्रेण, दुर्गा पाठ फलं लभेत्।
अति गुह्यतरं देवि, देवानामपि दुर्लभम्।। 3।।
गोपनीयं प्रयत्नेन, स्वयो निरिव पार्वति।
मारणं मोहनं वश्यं, स्तम्भनोच्चाटनादिकम्।
पाठ मात्रेण संसिद्धयेत्, कुंजिका स्तोत्रमुत्तमम्।। 4।।
नमस्ते रुद्र रूपिण्यै, नमस्ते मधुमर्दिनी।
नमः कैटभ हारिण्यै, नमस्ते महिषार्दिनि।। 5।।
नमस्ते शुंभ हन्त्रै च, निशुंभासुर घातिनि।
जाग्रतं हि महादेवि, जपं सिद्धं कुरुष्व मे।। 6।।
ऐंकारी सृष्टि रूपायै, ह्रींकारी प्रतिपालिका।
क्लींकारी काम रूपिण्यै, बीजरूपे नमोऽस्तु ते।। 7।।
चामुण्डा चण्डघाती च, यैकारी वरदायिनी।
विच्चे चाऽभयदा नित्यं, नमस्ते मंत्र रूपिणि।। 8।।

## ।। श्री बगला मंत्र ।।

ॐ ह्लीं बगलामुखि नित्यम् ऐहि ऐहि रविमंडल मध्यात् अवतर अवतर सान्निध्यं कुरु कुरु स्वाहा। ऐं ह्रीं श्रीं ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः बगले चतुर्भुजे मुद्गर शर संयुते दक्षिणे जिह्वा वज्र संयुते वामे श्रीमहाविद्ये पीत वस्त्रे पंच महाप्रेताधि रूढ़े सिद्ध विद्याधर वंदिते ब्रह्म विष्णु रुद्र पूजिते आनंद स्वरूपे विश्व सृष्टि स्वरूपे महाभैरव रूप धारिणि स्वर्ग मृत्यु पातालस्तंभिनि वाम मार्गाश्रिते श्री बगले ब्रह्म विष्णु रुद्र रूप निर्मिते षोडश कला परिपूरिते दानव रूप सहस्त्रादित्य शोभिते त्रिवर्णे एहि एहि मम हृदयं प्रवेशय प्रवेशय शत्रु मुखंस्तंभय स्तंभय अन्य भूत पिशाचान् खादय खादय अरि सैन्यं विदारय विदारय परविद्यां परचक्रं छेदय छेदय वीरचक्रंधनुषा संभारय संभारय त्रिशूलेन छिन्दि छिन्दि पाशेन बंधयबंधय भूपतिं वश्यं कुरु कुरु संमोहय संमोहय विना जाप्येन सिद्धय सिद्धय विना मंत्रेण सिद्धिं कुरु कुरु

सकल दुष्टान् घातय घातय मम त्रैलोक्यं वश्यं कुरु कुरु सकल कुल राक्षसान् दह दह पच पच मथ मथ हन हन मर्दय मर्दय मारय मारय भक्षय भक्षय मां रक्ष रक्ष विस्फोटकादीन् नाशयनाशय ॐ ह्लीं विषमज्वरं नाशय नाशय विषं निर्विषं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा।

धां धीं धूं धूर्जटे पत्निं, वां वीं वूं वागधीश्वरी।
क्रां क्रीं क्रूं कालिका देवि, शां शीं शूं मे शुभं कुरु।। 9 ।।
हुं हुं हुंकार रूपिण्यै, जं जं जं जम्भनादिनी।
भ्रां भ्रीं भ्रूं भैरवी भद्रे, भवान्यै ते नमो नमः।। 1 0 ।।
अं कं चं टं तं पं यं शं बिन्दुराभिर्भव।
आविर्भव विमर्दय हं सं लं क्षं मयि जाग्रय जाग्रय।
त्रोटय–2 जम्भय–2, दीपय–2 मोचय हूं फट् जां वौषट्।।1 1 ।।
ऐं ह्लीं क्लीं रंजय–2 संजय–2, गुंजय–2 दीप्तं कुरु–2 स्वाहा।। 1 2 ।।
पां पीं पूं पार्वती पूर्णा, खां खीं खूं खेचरी तथा।
म्लां म्लीं म्लूं दीव्यती पूर्णा, कुंजिकायै नमो नमः।
सां सीं सप्तशतीं सिद्धिं, कुरुष्व जप मात्रतः।। 1 3 ।।
इदं तु कुंजिका स्तोत्रं, मंत्र जागर्ति हेतवे।
अभक्ते नैव दातव्यं, गोपितं रक्ष पार्वति।। 1 4 ।।
यस्तु कुंजिकया देवि, हीनां सप्तशतीं पठेत्।
न तस्य जायते सिद्धिः, अरण्ये रोदनं यथा।। 1 5 ।।

## ।। अथ सप्त श्लोकी दुर्गा।।

**शिव उवाच-** देवि त्वं भक्त सुलभे, सर्व कार्य विधायिनी।
कलौ हि कार्य सिद्ध्यर्थमुपायं ब्रूहि यत्नतः।।

**देव्युवाच-** श्रृणु देव प्रवक्ष्यामि, कलौ सर्वेष्ट साधनम्।
मया तवैव स्नेहे, नाप्यम्बा स्तुतिः प्रकाश्यते।।

ॐ अस्य श्रीदुर्गा सप्तश्लोकी स्तोत्र मन्त्रस्य नारायणऋषिः अनुष्टुप् छन्दःश्रीमहाकाली महालक्ष्मी महासरस्वत्यो देवताः श्रीदुर्गा प्रीत्यर्थम् सप्तश्लोकी दुर्गा पाठे विनियोगः।।

ॐ ज्ञानिनामपि चेतांसि देवी भगवती हि सा। बलादाकृष्य मोहाय महामाया प्रयच्छति।। 1 ।।

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः, स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
दारिद्र्य दुःख भय हारिणि का त्वदन्या, सर्वोपकार करणाय सदाऽऽर्द्र चित्ता।। 2 ।।

सर्व मंगल मंगल्ये, शिवे सर्वार्थ साधिके। शरण्ये त्र्यम्बके गौरि, नारायणि नमोऽस्तु ते।। 3 ।।

शरणागत दीनार्त, परित्राण परायणे। सर्वस्यार्तिहरे देवि, नारायणि नमोऽस्तु ते।। 4 ।।

सर्व स्वरूपे सर्वेशे, सर्व शक्ति समन्विते। भयेभ्यस्त्राहि नो देवि, दुर्गे देवि नमोऽस्तु ते।। 5 ।।

रोगानशेषानपहंसि तुष्टा, रुष्टा तु कामान् सकलानभीष्टान्।
त्वामाश्रितानां न विपन्नराणां, त्वामाश्रिता ह्याश्रयतां प्रयान्ति।। 6 ।।

सर्वा बाधा प्रशमनं, त्रैलोक्यस्याखिलेश्वरि। एवमेव त्वया कार्यम् अस्मद् वैरि विनाशनम्।। 7 ।।

## ।। अथ दुर्गा द्वात्रिंशन्नाम माला।।

दुर्गा दुर्गार्ति शमनी, दुर्गापद्वि निवारिणी। दुर्गमच्छेदनी दुर्ग, साधिनी दुर्ग नाशिनी।। 1 ।।
दुर्गतोद्धारिणी दुर्ग, निहन्त्री दुर्गमापहा। दुर्गमज्ञानदा दुर्ग, दैत्य लोक दवानला।। 2 ।।
दुर्गमा दुर्गमालोका, दुर्गमात्म स्वरूपिणी। दुर्ग मार्गप्रदा दुर्गम्, अविद्या दुर्गमाश्रिता।। 3 ।।
दुर्गमज्ञान संस्थाना, दुर्गमध्यान भासिनी। दुर्गमोहा दुर्गमगा, दुर्गमार्थ स्वरूपिणी।। 4 ।।
दुर्गमासुर संहन्त्री, दुर्गमायुध धारिणी। दुर्गमांगी दुर्गमता, दुर्गम्या दुर्गमेश्वरी।। 5 ।।
दुर्ग भीमा दुर्ग भामा, दुर्गभा दुर्ग दारिणी। नामावलिमिमां यस्तु, दुर्गाया मम मानवः।। 6 ।।
पठेत् सर्व भयान्मुक्तो, भविष्यति न संशयः।। 7 ।।

## ।। श्री दुर्गा गुप्त सप्तशती ।।

ॐ ब्रीं ब्रीं ब्रीं वेणु हस्ते स्तुत सुर बटुकैर्हां गणेशस्य माता।
स्वानन्दे नन्दरूपे अनहतनिरते मुक्तिदे मुक्तिमार्गे।।
हंसः सोहं विशाले वलयगति हसे सिद्ध देवी समस्ता।
हीं हीं हीं सिद्ध लोके कच रूचि विपुले वीरभद्रे नमस्ते ।।1 ।।

ह्रींक्काररोच्चारयन्ती मम हरति भयं चण्डमुण्डौ प्रचण्डे।
खां खां खां खड्ग पाणे ध्रक ध्रक ध्रकिते उग्ररूपे स्वरूपे ।।
हुँ हुँ हुंकार नादे गगन भुवि तले व्यापिनी व्योमरूपे।
हं हं हंकार नादे सुरगण नमिते चण्डरूपे नमस्ते ।।2 ।।
ऐं लोके कीर्तयन्ती मम हरतु भयं राक्षसान् हन्यमाने।
घ्रां घ्रां घ्रां घोर रूपे घघ घघ घटिते घर्घरे घोर रावे ।।
निर्मांसे काकजङ्घे घसित नख नखा धूम्रनेत्रे त्रिनेत्रे।
हस्ताब्जे शूलमुण्डे कुल कुल कुकुले सिद्धहस्ते नमस्ते ।।3 ।।
ॐ क्रीं क्रीं क्रीं ऐं कुमारी कुह कुह मखिले कोलिमानुरागे।
मुद्रासंज्ञ त्रिरेखा कुरू कुरू सततं श्रीमहामारि गुह्रे ।।
तेजोङ्गे सिद्धिनाथे मनुपवन चले नैव आज्ञा निधाने ।
ऐङ्कारे रात्रिमध्ये स्वपित पशुजने तंत्राकान्ते नमस्ते ।। 4 ।।
ॐ व्रां व्रीं व्रूं व्रैं कवित्वे दहनपुर गते रुक्मिरूपेण चक्रे।
त्रिः शक्त्या युक्तवर्णादिक करनमिते दादिवं पूर्व वर्णे।।
ह्रीं स्थाने कामराजे ज्वल ज्वल ज्वलिते कोशिनि कोशिपत्रे।
स्वच्छन्दे कष्टनाशे सुरवर वपुषे गुह्यमुण्डे नमस्ते ।।5 ।।
ॐ घ्रां घ्रीं घ्रूं घोरतुण्डे घघ घघ घघघे घर्घरान्याङ्घ्रिघोषे।
ह्रीं क्रीं द्रूं द्रोञ्च चक्रे रर रर रमिते सर्वज्ञाने प्रधाने ।।
द्रीं तीर्थेषु च ज्येष्ठे जुग जुग जजुगे म्लीं पदे कालमुण्डे।
सर्वांगे रक्तधोरा मथन करवरे वज्रदण्डे नमस्ते ।।6 ।।
ॐ क्रां क्रीं क्रूं वामनमिते गगन गडगडे गुह्य योनिस्वरूपे।
वज्रांगे वज्रहस्ते सुरपति वरदे मत्त मातंगरूढे ।।
स्वस्तेजे शुद्धदेहे लललल ललिते छेदिते पाशजाले।
कुण्डल्याकाररूपे वृष वृषभ ध्वजे ऐन्द्रि मातर्नमस्ते ।।7 ।।

ॐ हुँ हुँ हुंकारनादे विषमवशकरे यक्ष वैताल नाथे।

सुसिद्ध्यर्थे सुसिद्धे: ठठ ठठ ठठठ: सर्वभक्षे प्रचण्डे।।

जूं स: सौं शान्ति कर्मेऽमृत मृतहरे नि:समे सं समुद्रे।

देवि त्वं साधकानां भव भव वरदे भद्रकाली नमस्ते ।।8।।

ब्रह्माणी वैष्णवी त्वं त्वमासि बहुचरा त्वं वराहस्वरूपा।

त्वं ऐन्द्री त्वं कुबेरी त्वमसि च जननी त्वं कुमारी महेन्द्री।।

ऐं ह्रीं क्लींङ्कार भूते वितलतल तले भूतले स्वर्गमार्गे।

पाताले शैलशृंगे हरि हरि भुवने सिद्धचण्डी नमस्ते ।।9।।

हं लं क्षं शौण्डिरूपे शमित भव भये सर्वविघ्नान्त विघ्ने।

गां गीं गूं गैं षडंगे गगन गति गते सिद्धिदे सिद्धसाध्ये।।

वं क्रं मुद्रा हिमांशोर्प्रहसतिवदने त्र्यक्षरे ह्सैं निनादे।

हां हूं गां गीं गणेशी राजमुखजननी त्वां महेशीं नमामि ।। 10 ।।

## ।। सर्व कामना मंत्र ।।

**विनियोग-** ॐ अस्य श्री 'देवि प्रपन्नार्तिहरे' मंत्रस्य वह्नि पुरोगमा ब्रम्हादयो सेन्द्रा सुरा ऋषय: उपजाति छन्द: श्री महालक्ष्मी देवता श्रीं बीजं श्री अपरा शक्ति: छिन्नादि दश महाविद्या: रजोगुण: घ्राण ज्ञानेन्द्रियं अद्भुत रस: लिंग कर्मेन्द्रियं सौम्य स्वर: जल तत्वं प्रतिष्ठा कला श्रीं उत्कीलनं प्रार्थना मुद्रा ममक्षेमस्थैर्य आयुरारोग्याभि वृद्ध्यर्थम् श्री जगदम्बा योगमाया भगवती दुर्गा प्रसाद सिद्धय्र्थम् च नमो युत प्रणव वाग्बीज स्वबीज लोम विलोम पुटितोक्त मन्त्र जपे विनियोग:।।

**करन्यास:-** ॐ ऐं श्रीं अंगुष्ठाभ्यां नम:। नमो नम: तर्जनीभ्यां स्वाहा।

देवि प्रपन्नार्ति हरे प्रसीद मध्यमाभ्यां वषट्। प्रसीद मातर्जगतोऽखिलस्य

अनामिकाभ्यां हुं। प्रसीद विश्वेश्वरि पाहि विश्वं कनिष्ठिकाभ्यां वौषट्।

त्वमीश्वरी देवि चराचरस्य करतल करपृष्ठाभ्यां फट्।।

**षडंगन्यासः-** ॐ ऐं श्रीं हृदयाय नमः। नमो नमः शिरसे स्वाहा। देवि प्रपन्नार्ति हरे प्रसीद शिखायै वषट्। प्रसीद मातर्जगतोऽखिलस्य कवचाय हुं। प्रसीद विश्वेश्वरि पाहि विश्वं नेत्रत्रयाय वौषट्। त्वमीश्वरी देवि चराचरस्य अस्त्राय फट्।।

**ध्यानम्-** संरक्ताम्बुज पादयुग्म विलसन्, मंजु क्वणन् नूपुरा।
संसारार्णव तारणैक तरणिः, लावण्य वारां निधिः।।
लीला लाल तमं शुकं मधुरमा, संलालयन्ती गिरा।
श्री शैलराज तनया प्रभजे, दुष्ट दल प्रभंजिनी।।

**मंत्र-** ॐ ऐं श्रीं नमः देवि प्रपन्नार्ति हरे प्रसीद, प्रसीद मातर्जगतोऽखिलस्य। प्रसीद विश्वेश्वरि पाहि विश्वं, त्वमीश्वरी देवि चराचरस्य नमो श्रीं ऐं ॐ।।

**सहस्त्र जपात् सिद्धिः, दूर्वाकुंर, पुष्प, फल, तिल घृतादि हव्येन होमः।**

## ।। मृतसंजीवनी महामृत्युंजय महामंत्र ।।

**विनियोगः-** ॐ अस्य श्री मृतसंजीवनी महामृत्युंजय मंत्रस्य महर्षि भृगु ऋ षिः पंक्ति गायत्री अनुष्टुप् छन्दः सदाशिव महामृत्युंजय रुद्रो देवता श्रीं बीजं ह्रीं शक्तिः ममाभीष्टसिद्धये जपे विनियोगः।

**अंगन्यासः-** ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः ॐ त्र्यम्बकं ॐ नमो भगवते रुद्राय शूल पाणये स्वाहा हृदयाय नमः। ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः यजामहे। ॐ नमो भगवते रुद्राय अमृत मूर्तये मां जीवय जीवय शिरसे स्वाहा। ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः सुगन्धिं पुष्टि वर्द्धनम् ॐ नमो भगवते रुद्राय चन्द्र शिरसे जटिने स्वाहा शिखायै वषट्। ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः उर्वारुक मिव बन्धनात् ॐ नमो भगवते त्रिपुरान्तकाय ॐह्रां ह्रीं कवचाय हुम्। ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः मृत्योर्मुक्षीय ॐ नमो भगवते रुद्राय त्रिलोचनाय ऋग् यजुः साम मंत्राय नेत्रत्रयाय बौषट्। ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः मामृतात् ॐ नमो भगवते रुद्राय ॐ अग्नित्रयाय ज्वल ज्वालाय मां रक्ष रक्ष अघोराय अस्त्राय फट्।।

**ध्यानम्**- ॐ चन्द्रोद् भाषित मूर्धजं सुरपतिं पीयूष पात्रं वहत्,
हस्ताब्जे न दधत्सु दिव्य ममलैः हास्यास्य पंकेरुहम्।
सूर्येन्द्वग्नि विलोचनं करतले पाशाक्ष सूत्रां कुशाम्,
भोजं विभ्रत मक्षयं पशुपतिं मृत्युंजयं संस्मरे।।

**मंत्रः**- ॐ ह्रौं ॐ जूँ सः भूर्भुवः स्वः ॐ त्र्यम्बकं यजामहे ॐ तत्सवितुर्वरेण्यं ॐ सुगन्धिं पुष्टि वर्द्धनम् ॐ भर्गो देवस्य धीमहि ॐ उर्वारुकमिव बन्धनान् ॐ धियो यो नः प्रचोदयात् ॐ मृत्योर्मुक्षीय मामृतात् ॐ स्वः भुवः भूः सः जूँ ह्रौं ॐ।।

**जपार्पण**- ॐ मृत्युंजय महारुद्र, त्राहि मां शरणागतम्।
जन्म मृत्यु जरा व्याधिः, पीडितं कर्म बन्धनैः।।

## ।। श्री कनकधारा स्तोत्रम् ।।

ॐ अंगं हरेः पुलक भूषणमाश्रयंती, भृंगांनेव मुकुलाभरणं तमालम्।
अंगीकृताखिल विभूतिरपांग लीला, मांगल्यदाऽस्तु मम मंगल देवतायाः।। 1 ।।
मुग्धा मुहुर्विदधती वदने मुरारेः, प्रेमत्रपा प्रणिहितानि गतागतानि।
माला दृशोर्मधुकरीव महोत्पले या, सा मे श्रियं दिशतु सागर सम्भवायाः।। 2 ।।
विश्वामरेन्द्र पद विभ्रम दान दक्षम्, आनन्द हेतुरधिकं मुरविद्विषोऽपि।
ईषन्निषीदतु मयि क्षण मीक्षणार्ध, मिन्दी वरोदर सहोदर मिन्दिरायाः।। 3 ।।
आमीलिताक्षमधिगम्य मुदा मुकुन्दं, आनंदकंद मनिमेष मनंग तंत्रम्।
आके करस्थित कनीनिक पक्ष्मनेत्रं, भूत्यै भवेन्मम भुजंग शयांगनायाः।। 4 ।।
बाह्वांतरे मधुजितः श्रित कौस्तुभे या, हारा वलीव हरि नीलमयी विभाति।
कामप्रदा भगवतोऽपि कटाक्षमाला, कल्याणमावहतु मे कमला लयायाः।। 5 ।।
कालाम्बुदालि ललितोरसि कैटभारेः, धाराधरे स्फुरतिया तडिदंगनेव।
मातुः समस्त जगतां महनीय मूर्तिः, भद्राणि मे दिशतु भार्गव नंदनायाः।। 6 ।।

प्राप्तं पदं प्रथमतः किल यत्प्रभावान्, मांगल्य भाजि मधु माथिनि मन्मथेन।
मय्यापतेत्तदिह मन्थर मीक्षणार्धम्, मंदालसं च मकरालय कन्यकायाः।। 7 ।।
दद्याद् दयानु पवनो द्रविणाम्बु धाराम्, अस्मिन्न किंचन विहंग शिशौ विषण्ये।
दुष्कर्म घर्म मपनीय चिराय दूरम्, नारायण प्रणयिनी नयनाम्बु वाहः।। 8 ।।
इष्टा विशिष्ट मतयोऽपि यया दयार्द्र, दृष्ट्या त्रिविष्ट पपदं सुलभं लभन्ते।
दृष्टिः प्रहृष्ट कमलोदर दीप्ति रिष्टां, पुष्टिं कृषीष्ट मम पुष्कर विष्टरायाः।। 9 ।।
गीर्देवतेति गरुणध्वज सुन्दरीति, शाकम्भरीति शशि शेखर वल्लभेति।
सृष्टि स्थिति प्रलय केलिषु संस्थितायै, तस्यै नमस्त्रि भुवनैक गुरोस्तरुण्यै।। 10 ।।
श्रुत्यै नमोऽस्तु शुभ कर्म फल प्रसूत्यै, रत्यै नमोऽस्तु रमणीय गुणार्ण वायै।
शक्त्यै नमोऽस्तु शतपत्र निकेतनायै, पुष्ट्यै नमोऽस्तु पुरुषोत्तम वल्लभायै।। 11 ।।
नमोऽस्तु नालीक निभाननायै, नमोऽस्तु दुग्धोदधि जन्म भूत्यै।
नमोऽस्तु सोमामृत सोदरायै, नमोऽस्तु नारायण वल्लभायै।। 12 ।।
सम्पत्कराणि सकलेन्द्रिय नंदनानि, साम्राज्य दान विभवानि सरोरुहाक्षि।
त्वद् वन्दनानि दुरिता हरणोद्यतानि, मामेव मातरनिशं कलयन्तु मान्ये।। 13 ।।
यत् कटाक्ष समुपासना विधिः, सेवकस्य सकलार्थ सम्पदः।
संतनोति वचनांग मानसैस्त्वाम्, मुरारि हृदयेश्वरीं भजे।। 14 ।।
सरसिज निलये सरोज हस्ते, धवलतरां शुक गन्ध माल्यशोभे,
भगवति हरि वल्लभे मनोज्ञे, त्रिभुवन भूतिकरि प्रसीद मह्यम्।। 15 ।।
दिग् घस्तिभिः कनक कुम्भ मुखा वसृष्ट, स्वर्वाहिनी विमल चारु जल प्लुतांगीम्।
प्रातर्नमामि जगतां जननीमशेष, लोकाधि नाथ गृहिणी ममृताब्धि पुत्रीम्।। 16 ।।
कमले कमलाक्ष वल्लभे त्वम्, करुणा पूर तरंगि तैर पांगैः।
अवलोकय माम किन्चनानाम्, प्रथमं पात्रं कृत्रिमं दयायाः।। 17 ।।
स्तुवन्ति ये स्तुतिभि रमूभिरन्वहं, त्रयीमयीं त्रिभुवन मातरं रमाम्।
गुणाधिका गुरुतर भाग्य भागिनो, भवन्ति ते भुवि बुध भाविताशयाः।। 18 ।।



# ।। चाक्षुषोपनिषद् ।।

**विनियोगः**

ॐ अस्याः चाक्षुषी विद्यायाः अहिर्बुध्न्य ऋषिः गायत्री छंदः सूर्योदेवता चक्षुरोगनिवृत्तये विनियोगः

**पाठ :**

ॐ चक्षुः चक्षुः चक्षुः तेजस्थिरोभव । माम् पाहि पाहि त्वरितम् चक्षुरोगान् शमय शमय। मामजातरूपं तेजो दर्शय दर्शय । यथाहम् अधोनस्यां तथा कल्पय कल्पय । कल्याणम् कुरू कुरू । यानि मम पूर्वजन्मो उपार्जितानि चक्षुः प्रतिरोधक दुष्कृतानि सर्वाणि निर्मूलय निर्मूलय । ॐ नमः चक्षुः तेजोदात्रे दिव्याय भास्कराय । ॐ नमः कल्याणकराय अमृताय । ॐ नमः सूर्याय । ॐ नमो भगवते सूर्याय अक्षितेजसे नमः । खेचराय नमः । महते नमः । रजसे नमः । तमसे नमः । असतो मा सद्गमय । तमसो मा ज्योतिर्गमय । मृत्योर्मा अमृतम् गमय । उष्णो भगवान शुचिरूपः । हंसो भगवान शुचिप्रतिरूपः । य इमाम् चाक्षुष्मतीम् विद्याम् ब्राह्मणो नित्यम् अधियते न तस्य अक्षिरोगो भवति । न तस्य कुले अंधो भवति। अष्टौ ब्राह्मणान् ग्राहयित्वा विद्यासिद्धिर्भवति । विश्वरूपम् घृणिनम् जातवेदसम् हिरण्मयम् पुरुषम् ज्योतीरूपम् तपंतम् सहस्ररशिमः शतधा वर्तमानः पुरः प्रजानाम् उदय इति ऐष सूर्यः । ॐ नमो भगवते आदित्याय ।।

## प्रार्थना

देव तुम्हारे कई उपासक, कई ढंग से आते हैं।
सेवा में बहुमूल्य वस्तुएँ लाकर तुम्हें चढ़ाते हैं।।
मैं ही हूँ गरीब एक ऐसा, जो कुछ साथ नहीं लाया।
फिर भी साहस कर मन्दिर में, पूजा करने को आया।।
धूप दीप नैवेद्य नहीं है, झाँकी का श्रृंगार नहीं।
पास गले में पहनाने को, फूलों का भी हार नहीं।।
नहीं दान है, नहीं दक्षिणा, खाली हाथ चला आया।
पूजा की विधि नहीं जानता, फिर भी नाथ चला आया।।

पूजा और पुजापा प्रभुवर, इसी पुजारी को समझो।
दान दक्षिणा और निछावर, इसी भिखारी को समझो।।
मैं उन्मत प्रेम का प्यासा, हृदय दिखाने आया हूँ।
जो कुछ है बस यही पास में, इसे चढ़ाने आया हूँ।।
चरणों में अर्पित हूँ तेरे, चाहो तो स्वीकार करो।
यह तो वस्तु तुम्हारी ही है, ठुकरा दो या प्यार करो।।

## यज्ञ नारायण प्रार्थना

यज्ञ रूप प्रभु हमारे, भाव उज्ज्वल कीजिये।
छोड़ देवें छल कपट को, मानसिक बल दीजिये।।
वेद की बोलें रिचायें, सत्य को धारण करें।
हर्ष में हों मगन सारे, शोक सागर से तरें।।
विष्णु रुद्रादिक यज्ञ से, विश्व का उपकार हो।
धर्म मर्यादा चलाकर, लाभ दें संसार को।।
नित्य श्रद्धा भक्ति से, यज्ञादि हम करते रहें।
रोग पीड़ित विश्व के, संताप सब हरते रहें।।
कामना मिट जाये मन से, पाप अत्याचार की।
भावनायें पूर्ण होवें, यज्ञ से नर नार की।।
लाभकारी हो हवन, हर जीवधारी के लिए।
वायु जल सर्वत्र हों शुभ, गन्ध को धारण किए।।
स्वार्थ भाव मिटे हमारा, प्रेम पथ विस्तार हो।
इदं न मम का सार्थक, प्रत्येक में व्यवहार हो।।
हाथ जोड़ झुकायें मस्तक, वंदना हम कर रहे।
हे नाथ करुणा रूप करुणा, आपकी सब पर रहे।।



# आरती (श्री सिद्धि विनायक जी)



श्री सिद्धिविनायक गणनायक, दीन दयाल।
आरती उतारें हम सब, परम कृपाल।।
माता तेरी पार्वती, पिता त्रिपुरारी हैं।
ऋद्धि सिद्धि पत्नी तेरी, लीला प्रभु न्यारी है।।
लक्ष लाभ सुत हैं दोनों, करते मालामाल।। 1 ।। आरती0 ....
वैरिच्य लम्बोदर, शूर्पकर्ण नाम हैं।
विघन विनाशक तेरी, लीला महान है।।
मूसे की सवारी तेरी, चंद्रमा है भाल।। 2 ।। आरती0 .....
ब्रम्हा विष्णु रुद्रदेव से, पहले पूजा तेरी है।
पान सुपारी फूल दूर्वा, यही भेंट जरूरी है।।
संत भक्त भर–भर लायें, लड्डुओं के थाल।। 3 ।। आरती0 .....
तिथी चतुर्थी के दिन जो जन, व्रत पूजा करते हैं।
भोग लगा सिंदूर चढ़ाये, नीराजन भी करते हैं।।
नाम लेते काट देते, संकटों के जाल।। 4 ।। आरती0 .....
गणपति गजानन की, जो जन आरति गाते हैं।
वक्रतुण्ड महाकाय, पाप मिटाते हैं।।
एकदंत दयावंत, परम कृपाल।। 5 ।। आरती0 .....



# आरती (श्री राधारमण जी)



**आरति राधा राधावर की।**

**महाभाव रसराज प्रवर की।।**

श्याम वरण पीताम्बर धारी,
हेम वरण तन नीली सारी।
सदा परस्पर सुख संचारी,
नीलकमल कर मुरलीधर की।। 1 ।। आरति0 ....

चारु चंद्रिका तन मन हारी,
मोर पिच्छ सुन्दर सिर धारी।
कुँज कुँवर नित कुँजविहारी,
अधरनि मृदु मुस्कान मधुर की।। 2 ।। आरति0 ....

प्रेम दिनेश काम तन हारी,
रहित सुखेच्छा निज अविकारी।
उर पावन रस संग्रहकारी,
भक्तकमल हित हिम सरवर की।। 3 ।। आरति0 ....



# आरती (श्री भोले नाथ जी)



गौरीशंकर भगवान की है आरती। भक्तजनों को भवसागर से तारती।।
यह वरदानी, अवढ़रदानी, पर्वत में डेरा डाले। हैं नाग गले में डाले।
शिव भंडारी, हे करतारी, श्री विश्वनाथ की आरती।। भक्तजनों का.......
यह महाकाल, कालों के काल, यह मानसरोवर वाले। हैं पियें भंग के प्याले।
यह मह ादेव, देवों के देव, श्री महाकाल की आरती।। भक्तजनों का.......
यह कैलासी, घट–घटवासी, मरघट में डेरा डाले। हैं भस्म रमाने वाले।
हे भूतनाथ, अनाथों नाथ, औढ़रदानी की आरती।। भक्तजनों का.......



# आरती (श्री पराम्बा भगवती जी)

मैया ऋद्धी दे सिद्धी दे, अष्ट नव निद्धी दे, वंश में वृद्धी दे, श्री भवानी।।
चरणों में प्रीत दे, संत संग रीत दे, जग में जीत दे, श्री भवानी।। 1 ।। मैया0 ...
करे शेर की सवारी, जाके चरणों की बलिहारी।
जिसके लोकड़िया अगवाड़ी, मेरे दुश्मन को ललकारती।। 2 ।। मैया0 ...
ध्यावे शक्ति को संसार, सभी नर और नार।
बेड़ा हो भव सागर से पार, वेद पढ़ें विद्यार्थी।। 3 ।। मैया0 ...
दुःखों को दूर कर, सुखों से भरपूर कर।
दुष्टों को चूर कर, जागती है ज्योत मैया राजरानी।। 4 ।। मैया0 ...
मैया ज्ञान दे ध्यान दे, महा वरदान दे।
सर्व भूमी राज दे, श्री राज रानी।। 5 ।। मैया0 ...
जिस पर होती है प्रसन्न, उसके काटे सारे फंद।
हो सकल आनन्द, कीजो मैया जी की आरती।। 6 ।। मैया0 ....

# आरती (पितर देवता जी)



मैं हाथ जोड़कर द्वार खड़ा, मेरे संकट काटो पितरो जी।

मैं जल की गगरिया लाया हूँ, तुम प्रेम से नहा लो पितरों जी।। 1 ।। मैं0...

मैं पाँचो वस्त्र लाया हूँ, तुम प्रेम से पहनो पितरों जी।। 2 ।। मैं0...

मैं चंदन घिसकर लाया हूँ, तुम तिलक लगा लो पितरों जी।। 3 ।। मैं0...

मैं माला गूँथकर लाया हूँ, तुम प्रेम से पहनो पितरों जी।। 4 ।। मैं0...

मैं लड्डू बर्फी लाया हूँ, तुम भोग लगा लो पितरों जी।। 5 ।। मैं0...

मैं दूध कटोरा लाया हूँ, तुम प्रेम से पी लो पितरों जी।। 6 ।। मैं0...

मैं खाली झोली लाया हूँ, तुम प्रेम से भर दो पितरों जी।। 7 ।। मैं0...

मैं जोगी बनकर आया हूँ, तुम दर्श दिखाओ पितरों जी।। 8 ।। मैं0...

मैं अपना मनोरथ लाया हूँ, तुम पूरण कर दो पितरों जी।। 9 ।। मैं0...



# आरती (श्री क्षेत्रपाल जी)



ॐ जय क्षेत्रपाल हरे, हरि जय क्षेत्रपाल हरे।
उनन्चस नाम हैं, तेरे नाना रूप धरे।।
ॐ जय क्षेत्रपाल हरे

यज्ञ पाठ पूजन में तुझको सब ध्यावें।
ऐरावत घंटेश्वर नाम तेरे गावें।।
ॐ जय क्षेत्रपाल हरे

भूमिया खेड़ा नाम से तेरे, ग्राम नगर साजे।
तेरे नाम का घण्टा, जगह जगह बाजे।।
ॐ जय क्षेत्रपाल हरे

उड़द, दही, चावल की बलि तुझको प्यारी।
भूत प्रेत डरते हैं, छवि तेरी न्यारी।।
ॐ जय क्षेत्रपाल हरे

चून दीप रख बलि पर, बलि पर चौराहे जावें।
भूत प्रेत बाधा से सब मुक्ति पावें।।
ॐ जय क्षेत्रपाल हरे

तुम्हीं नगर के स्वामी, तुम्हीं अन्नदाता।
तेरी पूजा कर नित, सुख सम्पत्ति पाता।।
ॐ जय क्षेत्रपाल हरे

क्षेत्रपाल की आरती, जो जन नित गावें।
'ओंकार' सब जन के संकट टल जावें।।
ॐ जय क्षेत्रपाल हरे



# आरती (श्री वास्तु पुरुष जी)



हे वास्तुपुरुष भूधारी, आरती मेरी स्वीकार करो ।
तुम्हें पूजें सब नर–नारि, आरती मेरी स्वीकार करो ।।

1. ब्रह्माजी मण्डल के स्वामी, कल्याण करो अन्तर्यामी ।
प्रभु विनती सुनो हमारी, आरती मेरी स्वीकार करो ।।

2. गृह वस्तु तू ही कहलाया है, भू–मण्डल शीश उठाया है ।
पातालवासी विषधारी, आरती मेरी स्कीकार करो ।।

3. सारी पृथ्वी डगमग डोले, जब वास्तु देव लेवें झोले ।
जन जन हैं तेरे आभारी, आरती मेरी स्वीकार करो ।।

4. कान्हा के शीश की छैया हो, विष्णु के शयन की शैया हो ।
मंथन में नेति तुम्हारी, आरती मेरी स्वीकार करो ।।

5. बिन पैर चले बिन कान सुने, 'ओंकार' आदि तुझे नमन करें ।
तेरी माल कण्ठ शिवधारी, आरती मेरी स्वीकार करो ।।



# प्रसादम्

## श्री देवी-देवता गायत्री मंत्र

**श्री गणेश**- ॐ एकदन्ताय विद्महे, वक्रतुण्डाय धीमहि, तन्नो दन्तिः प्रचोदयात् ।
**श्री दुर्गा**- ॐ देव्यै ब्रह्माण्यै विद्महे, कन्याकुमार्यै धीमहि, तन्नो दुर्गा प्रचोदयात्।
**श्री हनुमान**- ॐ आंजनेयाय विद्महे, वायुपुत्राय धीमहि, तन्नो हनुमतः प्रचोदयात।
**श्री नर्मदा**- ॐ नर्मदायै विद्महे, रेवादेव्यै धीमहि, तन्नो नर्मदा प्रचोदयात् ।
**श्री दत्तात्रेय**- ॐ दिगम्बराय विद्महे, अवधूताय धीमहि, तन्नो दत्तः प्रचोदयात्।
**श्री विष्णु**- ॐ नारायणाय विद्महे, वासुदेवाय धीमहि, तन्नो विष्णुः प्रचोदयात्।
**श्री राम**- ॐ दाशरथाय विद्महे, सीतावराय धीमहि, तन्नो रामः प्रचोदयात् ।
**श्री सीता**- ॐ जनकात्मजायै विद्महे, रामप्रियायै धीमहि, तन्नो सीताः प्रचोदयात् ।
**श्री लक्ष्मण** - ॐ दाशरथाय विद्महे, ऊर्मिलेशाय धीमहि, तन्नो लक्ष्मणः प्रचोदयात् ।
**श्री सूर्य**- ॐ भास्कराय विद्महे, सहस्त्रकराय धीमहि, तन्नो सूर्यः प्रचोदयात् ।
**श्री लक्ष्मी**- ॐ महालक्ष्म्यै च विद्महे, विष्णुपत्न्यै च धीमहि, तन्नो लक्ष्मीः प्रचोदयात् ।
**श्री कृष्ण**- ॐ देवकीनन्दनाय विद्महे, वासुदेवाय धीमहि, तन्नो कृष्णः प्रचोदयात् ।
**श्री राधा**- ॐ वृषभानुजायै विद्महे, कृष्णवल्लभायै धीमहि, तन्नो राधा प्रचोदयात् ।
**श्री सर्प**- ॐ भुजंगेशाय विद्महे, सर्पराजाय धीमहि, तन्नो सर्पः प्रचोदयात् ।
**श्री शिव**- ॐ तत्पुरुषाय विद्महे, महादेवाय धीमहि, तन्नो रुद्रः प्रचोदयात् ।
**श्री गरुण**- ॐ वैनतेयाय विद्महे, स्वर्णपक्षाय धीमहि, तन्नो गरुडः प्रचोदयात्।
**श्री गुरू**- ॐ परब्रह्मणे विद्महे, गुरुदेवाय धीमहि, तन्नो गुरुः प्रचोदयात् ।
**श्री कुबेर** - ॐ वैश्रवणाय विद्महे, धनाध्यक्षाय धीमहि, तन्नो कुवेरः प्रचोदयात् ।
**श्री नृसिंह**- ॐ नृसिंहाय विद्महे, वज्रदन्ताय धीमहि, तन्नो नृसिंहः प्रचोदयातृ।
**श्री सरस्वती**- ॐ ऐं वाग्देव्यै विद्महे कामराजाय धीमहि। तन्नो देवी प्रचोदयात्।
**श्री नारायण**- ॐ नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो नारायणयः प्रचोदयात्।
**श्री परशुराम**- ॐ जामदग्न्याय विद्महे महावीराय धीमहि। तन्नो परशुरामः प्रचोदयात्।
**अग्नि**- ॐ महाज्वालाय विद्महे अग्निमध्न्याय धीमहि। तन्नोऽग्निः प्रचोदयात्।
**श्री तुलसी**- ॐ श्रीत्रिपुराय हृदयाय तुलसीपत्राय धीमहि। तन्नो तुलसी प्रचोदयात्।
**श्री अन्नपूर्णा**- ॐ भगवत्यै च विद्महे माहेश्वय्यै च धीमहि। तन्नोऽन्नपूर्णा प्रचोदयात्।
**श्री बगलामुखी**- ॐ बगलामुख्यै च विद्महे स्तम्भिन्यै च धीमहि। तन्नो देवी प्रचोदयात्।

# मंडल चक्रम्







## रंग संकेत

| | |
|---|---|
| ■ | काला |
| ■ | पीला |
| ■ | हरा |
| ■ | लाल |
| □ | सफेद |




श्री चतुःषष्टियोगिनी मंडलम्
पूर्व
ईशान
आग्नेय
उत्तर
दक्षिण
वायव्य
नैर्ऋत्य
पश्चिम


श्री सप्तघृत मातृका, वसोर्द्धारा मंडलम्
पूर्व
ईशान
आग्नेय
श्री
उत्तर
दक्षिण
वायव्य
नैर्ऋत्य
पश्चिम


श्री नवग्रह मंडलम्
पूर्व
ईशान
आग्नेय
उत्तर
दक्षिण
वायव्य
नैर्ऋत्य
पश्चिम


श्री क्षेत्रपाल मंडलम्
पूर्व
ईशान
आग्नेय
उत्तर
दक्षिण
वायव्य
पश्चिम
नैऋत्य


श्री षोडशमातृका मंडलम्
पूर्व
ईशान
आग्नेय
उत्तर
दक्षिण
वायव्य
पश्चिम
नैऋत्य


श्री सर्वतोभद्र मंडलम्
पूर्व
ईशान
आग्नेय
उत्तर
दक्षिण
वायव्य
पश्चिम
नैऋत्य

## ✧ श्री गौरीतिलक मंडलम् ✧




## ✧ श्री रामभद्र मंडलम् ✧

